अस्य गर्भदेशार्द्धविधीयमान् कर्णस्तावता मानेन तद्भुजात् तस्य कर्णस्य भुजात् लाञ्छयेत् । अत्र बाह्यचतुरस्र सूत्राग्रेण कर्णोभयपार्श्ववर्त्तीनि निजभुजाकारतया भुजार्द्धेनोच्यन्ते । अयमाशयः—बाह्यचतुरस्रस्याभ्यन्तरे कस्मिन् कोणे कर्णार्द्धपरिमितस्य सूत्रस्यादिं निधाय तत्सूत्रं चतुरस्ररेखोपरि प्रसार्य्य सूत्रप्रान्ते लाञ्छयेत् । एवं प्रतिकोणं सूत्रादिं निधाय प्रातिलोम्यानुलोम्येन सूत्रप्रसारणात् तत्तत्प्रान्ते लाञ्छयन् प्रतिदिशं लाञ्छनद्वयकरणाद्दिक्चतुष्टयेन लाञ्छनेषु सूत्राष्टकनिपातनादष्टास्रकुण्डं कुर्य्यादिति । अथेमिह निर्म्माणप्रकारः—पूर्व्वचतुरस्रीकृतस्य क्षेत्रस्य बहिश्चतुर्द्दिक्षु द्वादशमं भागं विन्यस्य तत्परिमाणेन अपरं चतुरस्रं कुर्य्यात् । अथ तदीयकर्णार्द्धपरिमितस्य सूत्रस्य प्रतिकोणमादिं निधाय चतुरस्ररेखोपरि प्रसारणात् तत्तत्प्रान्तेषु लाञ्छयन् दिक्चतुष्टयेन लाञ्छनाष्टकं कृत्वा तल्लाञ्छनोपरि सूत्राष्टकनिपातनादैशान्यादिषु पूर्व्वाभिमुखयोनिकमष्टास्रकुण्डं कुर्य्यात् । इदानीं दिग्नियमव्यत्यासेनैव तत्तत्कर्म्मोपयोगितया विशेषलक्षणोपदिष्टं कुण्डमुच्यते । "सप्तमांशं बहिर्न्यस्य कृत्वा वृत्तमिह भ्रमात् । चतुर्थभागन्यूनेन पूर्व्वक्षेत्रेण सम्मितैः । धनुर्ज्याकृतिभिः पञ्चसूत्रैः पञ्चास्रकुण्डकम् । होमे प्रशस्यते भूतशाकिनीग्रहनिग्रहे" । चतुरस्रस्य क्षेत्रस्य बहिःप्रदेशे चतुर्द्दिक्षु क्षेत्रसप्तमांशं विन्यसेत् । ततः क्षेत्रगर्भविन्यस्तादेः बाह्यस्थितसप्तमांशोपरि विन्यस्तप्रान्तस्य सूत्रस्य सर्व्वतः परिभ्रामणात् वृत्तं निष्पादयेत् । पूर्व्वक्षेत्रेणेति, बहिःस्थितवृत्तापेक्षया, पूर्व्वक्षेत्रत्वेन आन्तरचतुरस्रक्षेत्रमेवोच्यते । ततश्चायमर्थः आन्तरचतुरस्रस्य यद्दैर्घ्यं ततः स्वकीयचतुर्थभागन्यूनं कृत्वा यन्मानं भवति तावता मानेन परिमितं सूत्रं निधाय तादृशानि पञ्च सूत्राणि बाह्यवृत्तस्यान्तर्विन्यस्य सूत्रसन्धौ कोणं कुर्य्यात् । तानि च पञ्च सूत्राणि प्रत्येकं प्रान्तद्वयसंस्पृष्टवृत्तत्वात् धनुर्ज्याकृतीनि धनुरारूढमौर्वीसदृशानि स्युः । ततः पञ्चसूत्रातिरिक्तं सर्व्वं परित्यज्य पञ्चास्रकुण्डं रचयेत् । तच्च ग्रहनिग्रहादिहोमे प्रयोज्यम् । "दशमांशं बहिर्न्यस्य कृत्वा वृत्तमिह भ्रमात् । भक्त्वा क्षेत्रं चतुःषष्ट्या तद्भागैः त्रिंशता त्रिभिः । समानसूत्रं तादृक्षात् सप्तास्रं सूत्रसप्तकात् । अभिचारोपशान्त्यर्थं होमकुण्डमिति स्मृतम्" । इहापि चतुरस्रस्य क्षेत्रस्य दशमभागं चतुर्द्दिक्षु बहिर्विन्यस्य पूर्व्ववत् वृत्तं कुर्य्यात् । अथ पूर्व्वक्षेत्रं चतुःषष्ट्या विभज्य तेषां चतुःषष्टिसंख्यानां भागानां मध्ये त्रयस्त्रिंशत्संख्यैर्भागैः परिमितं सूत्रं कृत्वा तादृशानि सप्त सूत्राणि वृत्तस्यान्ते विन्यस्य सप्तास्रं कुण्डं कुर्य्यात् । अत्रापि सूत्राणां धनुर्ज्याकारत्वं सूत्रसन्धौ कोणनिष्पत्तिं सप्तसूत्रातिरिक्तपरित्यजनञ्चेति पूर्व्ववदेव बोद्धव्यम् । एतच्च कुण्डमभिचारदोषोपशमनहोमेषु प्रयोज्यम् । आह विश्वकर्म्मा "यावन्मात्रः कुण्डविस्तार उक्तस्तावत् खातस्यापि मानं प्रदिष्टम् । यादृक् कुण्डस्याकृतिः सम्प्रदिष्टा तादृग्रूपं मेखलाया विदध्यात् । स्थापने सर्व्वकुण्डानां ध्वजायः सर्व्वसिद्धिदः" । सर्व्वेषु चैतेषु मोक्षणानादृत्याङ्गुलयवादि न्यूनमतिरिक्तं वा विधाय ध्वजायः साधनीयः । विस्तारे दैर्घ्ये गुणिते अष्टभिर्विभक्ते यच्छेषः परिशिष्यते तदा ध्वजाय इति । "खातेऽधिके भवेद्रोगो हीने धेनुधनक्षयः । वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले । मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः । भार्य्याविनाशनं प्रोक्तं कुण्डे योन्या विना कृते । अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्ज्जितम्" । खातहीने भवेद्रोग इत्यादिना खातादिलक्षणरहितस्य कुण्डस्यानिष्टफलत्वदर्शनादिदानीं खातादीनामेव लक्षणमभिधीयते ; तद्यथा मोक्षपुण्डोत्तरयामले "चतुर्विंशतिमं भागमङ्गुलं परिकल्प्य तु । चतुर्विंशाङ्गुलं हस्तं कुण्डानां परिकल्पयेत् । हस्तमात्रं खनेत्तिर्य्यगूर्द्ध्वं मेखलया सह" । मुष्टिमानं शताद्दीत्यादिना प्रसिद्धेनैव हस्ताङ्गुलव्यवहारेण होमानुसारात् कुण्डमानमुक्तम् । इयन्तु खातादिमानकथनार्थं परिभाषा क्रियते । चिकीर्षितकुण्डक्षेत्रं चतुर्विंशतिधा विभज्य यावान् चतुर्विंशतितमो भागस्तावत्परिमाणमङ्गुलं परिकल्प्य चतुर्विंशत्या अङ्गुलैर्हस्तं परिकल्पयेत् । ततस्तेन हस्तेन परिमितं सर्व्वकुण्डानां तिर्य्यक्खातमानं विधाय मेखलासहितस्य खातस्य तेनैव हस्तेन परिमितमूर्द्ध्वमानं विदध्यात् । प्रथमे उक्तम् "कुण्डं जिनाङ्गुलम् । तिर्य्यगूर्द्ध्वं मेखलया सह" जिनाङ्गुलं चतुर्विंशत्यङ्गुलम् । प्रतिष्ठासारसंग्रहेऽपि "पञ्च-त्रिमेखलोच्छ्रायां खात्वा शेषमधः खनेत्" । विश्वकर्म्मणाप्युक्तम् "व्यासात् खातः करः प्रोक्तो निम्नस्त्र्यङ्गुलेन तु" । त्र्यङ्गुलानि-पञ्चदशाङ्गुलानि खातस्य निम्नत्वम् । "उन्नता सा नवाङ्गुलैरिति, वक्ष्यमाणत्वान्मेखलात्रयपक्षे नवाङ्गुलं प्रथममेखलयोरुच्चैव इन्दुभयोश्चतुर्द्दि-

शताङ्गुलम्। कण्ठमानमुक्तं कालोत्तरे "खाताद्बाह्येऽङ्गुलः कण्ठः सर्व्वकुण्डेष्वयं विधिः"। खातमेखलयोरन्तराले अङ्गुलकालेन कण्ठमोष्ठपरपर्य्यायं कुर्य्यात्। सारसङ्ग्रहे "खाताद्बाह्याङ्गुलः कण्ठस्तदूर्द्ध्वे मेखला क्रमात्। मेखलालक्षणमुक्तं कामिके" "क्षेत्रार्कांशेन तच्चौष्ठः स्यात्तद्वेदहुँभागतः"। मेखलापृथुतोच्छ्रायः कुण्डाकारा तु मेखला। सर्व्वेषान्तु प्रकर्त्तव्या मेखलैकाल काश्यपात्"। क्षेत्रस्य अर्कांशेन—द्वादशांशेन कुण्डस्यौष्ठः कण्ठशब्दवाच्यः स्यात् तद्वेदभागतः कुण्डचतुर्थांशतो मेखलायाः पृथुता विस्तारः। तथा चतुर्भागतः षड्भागेन मेखलोच्छ्रायः कार्य्यः। पिङ्गलामतेऽपि "खातादेकाङ्गुलं त्यक्त्वा मेखलानां स्थितिर्भवेत्। मेखलैकाथवा तिस्रो भूतसंख्याथवा प्रिये"। भूतसंख्याः—पञ्चसंख्याः। उक्तञ्च प्रथमे "कण्ठाङ्गुलाद्बहिः कार्य्या मेखलैका षडङ्गुला। चतुस्त्र्यङ्गुला यद्वा तिस्रः सर्व्वत्र शोभनाः"। यदा एका मेखला तदा वा विस्तारोत्सेधाभ्यां षडङ्गुला विधेया "एका षडङ्गुलोत्सेधविस्तारा मेखला मतेति "पिङ्गलोक्तेः। यदा तु मेखलात्रयपक्षस्तदा क्रमेण चतुस्त्रिद्व्यङ्गुलमानाः कर्त्तव्याः। मोहचूडोत्तरे "मेखलात्रितयं कार्य्यं कोणरामयमाङ्गुलैः। कोणाः—चत्वारः। रामाः—त्रयः। यमौ—द्वौ। तत्र सर्व्वान्तिमा, द्व्यङ्गुला। मध्यस्था त्र्यङ्गुलाः। कुण्डकण्ठसन्निहिता चतुरङ्गुला इति। सत्येवं प्रथममेखलायाः कुण्डकण्ठादारभ्य नवाङ्गुल उत्सेधः स्यात्। क्रियासंग्रहेऽपि "प्रथमाष्टाङ्गुला व्यासादुच्चता सा नवाङ्गुलैः। मध्या तु त्र्यङ्गुला बाह्ये तृतीया तु यमाङ्गुला। मेखलाः पञ्च वा कार्य्याः षट्पञ्चाग्नित्रिपक्षकैः"प्रथमा कुण्डसन्निहिता आन्तरोत्सेधनवाङ्गुला बाह्ये तु चतुरङ्गुलैव। अब्ध्यङ्गुला—चतुरङ्गुला। अब्धयः—चत्वारः। पक्षौ—द्वौ। योनिलक्षणमुक्तं स्वायम्भुवे "मेखलामध्यतो योनिः कुण्डार्द्धं त्र्यंशविस्तृता। अङ्गुष्ठमानोच्छकण्ठा कार्य्याश्वत्थदलाकृतिः। प्रागग्निशास्यकुण्डानां प्रोक्ता योनिरुदङ्मुखा। पूर्व्वमुखाः स्मृताः शेषा यथाशोभं समन्विताः। मेखलाया गर्भदेशे कुण्डार्द्धदीर्घा कुण्डतृतीयांशविस्तृता योनिःकार्य्या। अत्रौष्ठशब्देन योन्यप्युच्यते। कण्ठशब्देन च योनिमेखला अङ्गुष्ठशब्दः, अङ्गुलपर्य्यायः। एकाङ्गुलपरिमाणेन योनेरग्रं मेखलासु कुर्य्यादित्यर्थः "विस्तारोऽष्टाङ्गुलो योनेरग्रमङ्गुलविंशतिमिति" पिङ्गलोक्तेः। नारदीये कुण्डत्र्यंशप्रविस्तारा योनिरुच्छ्रयताङ्गुलम्। कुण्डार्द्धेन तु दीर्घा स्यात् कुण्डोष्ठी बोधिपत्रवत्"। कुण्डोष्ठीति यथा कुण्डे द्वादशांशेन ओष्ठो विहित एवं योनेरपि द्वादशभागेन ओष्ठः कार्य्य इत्यर्थः। तथा कुण्डे प्रविष्टओष्ठो यस्या इति। बोधिपत्रम्, अश्वत्थपत्रम्। त्रैलोक्यसारे "दीर्घात् सूर्य्याङ्गुला नाभिस्त्र्यंशोना विस्तरेण तु। एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे तथा। कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्नता। अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिस्तथा। दक्षस्था पूर्व्वशाग्नेस्तु वामस्था पश्चिमोत्तरे। नवमस्यापि कुण्डस्य योनिर्द्दक्षस्थिता"। सूर्य्याङ्गुला—द्वादशाङ्गुला। त्र्यंशोनेति—दैर्घ्यतृतीयांशमात्रविस्तारा। एकेनाङ्गुलेनोच्छ्रिता तथा, एकेनाङ्गुलेन कुण्डमध्ये प्रविष्टा। कुम्भद्वयसमायुक्तेति—पूर्व्वोक्ताग्नेयकुण्डस्य तद्धस्ततेर्योनेर्मूलप्रदेशस्थितं द्वयमेव गजकुम्भाकृतित्वात् कुम्भशब्देनोक्तम्। तेनात्र कुण्डस्याकृतिर्घटद्वयं मतृपिण्डद्वयं वा स्यादिति तद्व्याख्यम्। अङ्गुष्ठमेखलेति, एकाङ्गुलमानया मेखलया परिवेष्टितेत्यर्थः। मध्ये त्विति, यथा स्रुचि घृतधारणाय बिलं क्रियते तथा योनिमध्येऽपि बिलं कर्त्तव्यमित्यभिप्रायः। दक्षस्थेति, पूर्व्वाग्नेयाद्यकुण्डेषु दक्षिणभागे उत्तराभिमुखा योनिः कार्य्या नैर्ऋत्यादिकुण्डेषु तु पश्चिमभागे प्राङ्मुखा विधेया। नवम इति, अष्टदिक्षु कुण्डाष्टकं विधाय पूर्व्वेशानदिशोरन्तराले यन्नवमं कुण्डं चतुर्दिक्षु वा कुण्डचतुष्टयं कृत्वा ईशानदिशि यत् पञ्चमं कुण्डं तयोरपि दक्षिणभागेऽपि योनिः कार्य्येत्यर्थः"।

तत्र विशेषलक्षणादिकं कुण्डोद्द्योते उक्तं यथा "शारदातिलके "अष्टाशासु रच्यानि कुण्डान्येतान्यनुक्रमात्। चतुरस्रं योनिरर्द्धचन्द्रं त्र्यस्रञ्च वर्त्तुलम्। षडस्रं पङ्कजाकारमष्टास्रन्तानि नामतः। आचार्य्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोरिति" सिद्धान्तशेखरे "पुरन्दरेशयोर्मध्ये वृत्तं वा चतुरस्रकम्। तदाचार्य्यं विनिर्द्दिष्टमिति" अयमुत्तमः पक्षः। अथ पञ्चकुण्डे एककुण्डनिवेशनं यथा "आग्नेयकुण्डैरिह पञ्चकुण्डी चैकं यदा पश्चिमसोमशैवे। वेदाः सपादेन करेण यद्वा पादान्तरेणाखिलकुण्डसंस्था" आशा—दिक्। तत्र कुण्डानि चतुरस्रहस्तार्द्धहस्तपञ्चानि ईशदिशि कुण्डं चतुरस्रं वृत्तं वा तैः पञ्चकुण्डीनिवेशनं स्यात् यदा चैकमेव कुण्डं

तदा पश्चिमे उत्तरे वा ऐशान्यां वा स्यात् परन्तु चतुरस्रं, वेद्याः चत्वारि सर्व्वाणि कुण्डानि सपादेन करेण त्रिंशदङ्गुलान्तरेण वा पादान्तरेण द्वादशाङ्गुलान्तरेण वा वेदीपादान्तरेण वेद्याश्चतुर्थांशेन वा नवकुण्डे नवकोष्ठे कृतेऽष्टसु भागेषु मध्ये भवन्तीति व्याख्या" नारदीये "यत्नोपदिष्टे कुण्डलक्षणं तत्र कर्म्मणि । वेदाश्रमर्द्धचन्द्रं च वृत्तं पद्मनिभं तथा" । चतुःकुण्डपक्षे वार्त्तोनाडी-स्थुक्तं नारदीये "पीठमष्टसु वेत्याग्रच्छं उपमार्ष्य मनर्त्तकम् कुर्य्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः । पञ्चमं कारयेत् कुण्डमीशदिग्गोचरं द्विजेति" अयं मध्यमः पक्षः । केचित्पूर्व्वपश्चयोरिति लिखितवन्तः सोमशम्भौ "एवं वा शिवकाष्ठायां प्रतीच्यामारभेत वः "आचार्य्या अपि "अथवा दिशि कुण्डस्योत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेव" इत्यं कनिष्ठः पक्षः । नवग्रहाधिकारे वशिष्ठसंहितायाम् "कुण्ड-मध्यभागे तु कारयेच्चतुरस्रकम् । चित्ताविषयजातं तत् कुण्डं तु चतुरस्रमिति । वेदीपादान्तरन्यस्तानि कुण्डानि नव-पञ्च चेति" । नारदीये "कुण्डेऽत्यन्तरस्यैव सपादकरसंमित-मिति" केचित्त्रयोदशाङ्गुलमथमान्तरमुक्तं तत्र मण्डपानुसा-रेण व्यवस्था । अथ वर्णविशेषस्य स्त्रीणाञ्च कुण्डविशेषमाह "विप्राच्चतुरस्रं च वृत्तं च वृत्तार्द्धं त्र्यस्रं स्यादष्टकोणानि वापि । सर्व्वेषामर्द्धचन्द्ररूपाणि चान्ये योन्याकाराण्यङ्गना-नां मतानि" "विप्रादारभ्य विप्रक्षत्रियविट्शूद्राणां चतुःकोणवृत्तवृत्तार्द्धत्रिकोणानि भवन्ति । अथवा विप्रादि वर्णेषु चतुःकोणानि वर्त्तुलानि वा सर्व्वाणि कुण्डानि भवन्ति यदा स्त्री यजमाना तदा योन्याकाराण्येव कुण्डानि भवन्तीति व्याख्या । शारदायाम् "विप्राणां चतुरस्रं स्यात् राज्ञां वर्त्तुलमिष्यते । वैश्यानामर्द्धचन्द्राभं शूद्राणां त्र्यस्र-मीरितम् चतुरस्रन्तु सर्व्वेषां केचिदिच्छन्ति तान्त्रिकाः" । पञ्चरात्रे "सर्व्वाणि तानि वृत्तानि चतुरस्राणि वा सदा" सनत्कुमारः "स्त्रीणां कुण्डानि विप्रेन्द्र ! योन्याकाराणि कारयेदिति" । अथ प्राच्यादिकुण्डेषु फलविशेषमाह "सिद्धिः पुत्राः शुभं शत्रुनाशः शान्तिर्मृतिच्छेदे वृष्टिरारोग्यमुक्तं फलं प्राच्या-दिकुण्डके" प्राच्यादिकुण्डेऽष्टस्वष्टौ फलानि स्युः । शारदायाम् "सर्व्वसिद्धिकरं कुण्डं चतुरस्रमुदा-हृतम् । पुत्रप्रदं योनिकुण्डमर्द्धचन्द्राभं शुभप्रदम् । शत्रु-क्षयकरं त्र्यस्रं वर्त्तुलं शान्तिकर्म्मणि छेदमारणयोः षड-स्रं पद्मसन्निभम् । वृष्टिदं रोगशमनं कुण्डमष्टास्रमी-रितम्" । कामिके तु प्रकारान्तरम् "ऐन्द्र्यां लक्ष्ये चतुः-कोणमग्नौ भौमे भगाकृति । चन्द्रार्द्धं नैरृते याम्ये, हृद्ये त्र्यस्रन्तु नैरृते । वारुण्यां शान्तिके वृत्तं, षडस्रं पाट-नेऽनिले । उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रि मुक्तिदमिति" अथ होमसंख्यया कुण्डमानम् । "शतार्द्धे रत्निः स्याच्छत-परिमितेऽरत्निमितिः सहस्रे हस्तःस्यादयुतहवने हस्त-युगलम् । चतुर्हस्तं लक्षे प्रयुतहवने षट्करमितैः ८ ककुम्-भिर्वा १०कोटौ नृपकरमपि प्राहुरपरे" शतार्द्धमिते पञ्चाश-न्मिते होमे रत्निमितं कुण्डं, शतमिते अरत्निमितं, सहस्रमिते होमे हस्तमितं, दशसहस्रमिते द्विहस्तं, लक्ष-होमे चतुर्हस्तमितं दशलक्षहोमे षड्हस्तमितं, कोटि-होमेऽष्टहस्तमितं दशहस्तमितं वा । केचित् षोडश-करमपि प्राहुरिति व्याख्या भविष्यपुराणे "शुद्धिमात्रं शतार्द्धे तु शते चारत्निमात्रकम् । सहस्रे त्वथ होतव्ये कुण्डं हस्तात्मकम् । द्विहस्तमयुते तत्र लक्षमाने चतुःकरम् । दशलक्षमिते होमे षट्करं परिचक्षते । अष्टहस्तात्मकं कुण्डं कोटिहोमेषु नाधिकम्" शार-दायाम् "दशहस्तमितं कुण्डं कोटिहोमेऽपि शस्यते" स्कान्दे "कोटिहोमे चतुर्हस्तं चतुर्हस्तं समन्ततः । योनिवक्त्रद्वयोपेतन्तदप्याहुस्त्रिमेखलमिति" इदं प्रायः-स्त्वल्पद्रव्यविषयम् "अथ केषाञ्चिन्मते कुण्डमानम् "पञ्चाशदाद्यशतकान्तद्वरैकवृद्ध्यादशहस्तकम् । कोण-द्विर्दिग्विंशतिलक्षलक्षद्वये मुनीश्वरैकमात्रहस्तकम्" । लक्षसंख्या दशलक्षावधानं पञ्चाशीत्याद्य-शतकान्तम् एकलक्षमारभ्य लक्षद्वया दशलक्षपर्यन्त-मित्यर्थः करस्य एकद्वयाद्यहस्तकम्पर्यादीत्याद्य-हस्तकम् एककरमारभ्य एककरवृद्ध्या दशहस्तं याव-त्कुण्डं प्राहुरिति पूर्व्वेणान्वयः कोटेरर्द्धे पञ्चाशल्लक्षे दशविंशतिलक्षे लक्षद्वये पञ्चायतुषट्सु क्रमात् सप्त-पञ्चषट्त्रिकरं कुण्डमिति व्याख्या: शारदायाम् "एक-हस्तमितं कुण्डं लक्षहोमे विधीयते । लक्षाणां दशकं यावत्तावद्धस्तेन वर्द्धयेत्" सिद्धान्तशेखरे "लक्षार्द्धे त्रिकरं कुण्डं लक्षहोमे चतुःकरम् । कुण्डं पञ्चकरञ्चोक्तं दश-लक्षाहुतौ क्रमात् । षड्हस्तं लक्षविंशत्यां, कोट्यर्द्धे सप्त-हस्तकमिति" । इदमेव कुण्डमानञ्च कामिकादिमतं सिद्धान्त-शेखरशारदाहेमाद्रिप्रमुखैः प्राचीनैः राघवभट्टरामवाजपे-यिकुण्डरत्नाकरकुण्डकौमुदीकारादिभिर्नवीनैश्च लिखितं क्वचिदन्यथापि कुण्डमानान्युक्तानि तानि तत्तत्प्रकरण-

पञ्चाशत्कर्मविधेषु कुण्डानि । अथैकहस्ताद्दशहस्तान्तं यावत्कुण्डेषु भुजकोटिमानम् "वेदाश्वोऽपि युगाग्नयःशशियुगान्यष्टाब्धयश्चोपवोऽष्टाश्वार्कशरास्तवाङ्गकमिता नेत्रर्षयोऽब्धयः शराः । अङ्गुल्यो, ऽथ यवाः समब्धिभवः खं पञ्चषट्सागराः सप्ताब्धं शुनयूकमौ निगदिता वेदाक्षके बाहवः" । एकहस्ते कुण्डे चतुर्विंशत्यङ्गुलान्यायामविस्तारौ, द्विहस्ते चतुस्त्रिंशदङ्गुलानि । इमानि पादोन त्रियवचतुष्टयन्यूनानि अल्पान्तरत्वात् पूर्णान्येव कृतानि । त्रिहस्ते एकचत्वारिंशदङ्गुलानि । चतुर्हस्ते अष्टचत्वारिंशदङ्गुलानि । पञ्चहस्ते पञ्चयवाधिकानि त्रिपञ्चाशदङ्गुलानि । षड्हस्ते त्रिपदोनैकोनषष्टिः, सप्तहस्ते सार्द्धत्रिषष्टिः। अष्टहस्ते यवोना सप्तषष्टिः । नवहस्ते द्विसप्ततिः दशहस्ते यवोना १षट्सप्ततिरिति षोडशहस्ते षण्णवतिः चतुर्भुजे कुण्डे भुजाङ्कका इति व्याख्या । अत्रोपपत्तिः एकहस्तस्य चतुर्विंशत्यङ्गुलात्मकस्य भुजकोटिघातः क्षेत्रफलं तत्र षट्सप्तत्यधिकपञ्चशती५७६ । एतत्पदमेकहस्तक्षेत्राङ्गुलानि चतुर्विंशतिः । एवं क्षेत्रफलस्य द्व्यादिगुणस्य मूलं चतुस्त्रिंशदाद्यङ्गुलानि भवन्ति । अथयोनिनिवेशनम् "कुण्डलयी दक्षिणयोनिरैन्द्र्याः सौम्यापका स्यादितराणि पञ्च । पश्चाद्गमानीन्द्रदिगप्रकाणि योनिर्न कोणे न च योनिकुण्डे"ऐन्द्र्याः प्राच्या आरभ्य कुण्डलयी चतुरस्रयोनिवृत्तार्द्धरूपा दक्षिणयोनिः स्यात् उत्तराग्रा पश्चाद्दीता उदङ्मुखः । इतराणि पञ्च कुण्डानि त्र्यस्रवृत्तषडस्रपद्माष्टास्राणि प्रत्यग्योनीनि प्रागग्राणि पश्चाद्दीता प्राङ्मुखः । नवममपि कुण्डं दक्षिणयोन्युदगग्रम् । योनिः कोणे योनिकुण्डे च न कार्येति व्याख्या । स्वायम्भुवे "प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखी । पूर्व्वमुखा स्थिताः शेषाः यथाशोभं व्यवस्थिताः" इति । त्रैलोक्यसागरे "नवमस्यापि कुण्डस्य योनिर्दक्षिणदले स्थितेति" अन्यत्र "नार्पयेत् कुण्डकोणेषु योनिं तान्त्रिकसत्तमः" इति "योनिकुण्डे तथा योनिं, पद्मे नाभिं विवर्जयेदिति" । अथ सर्वेषां कुण्डानां प्रकृतिभूतं चतुरस्रमाह "द्विघ्नव्यासन्यूर्द्धचिह्नं सपाशं सूत्रं शङ्कौ पश्चिमे पूर्व्वगेऽपि । दत्त्वाकृर्षेत् कोणयोः पाशतुर्य्यं स्यादेवं वा वेदकोणं समानम्" । इष्टव्यासाद् द्विगुणितं व्यासं चतुर्थांशकृतचिह्नं सपाशं सूत्रं पूर्व्वपश्चिमस्थयोः शङ्क्वोर्दत्त्वा दक्षिणोत्तरसूत्रमध्ये यथामध्यचिह्नं भवति तथा कोणयोः पाशाच्चतुर्थांशे चाकर्षेत् एवमन्यतोऽपि । एवं कृते समचतुरस्रं स्यात् इदमेव सर्वेषां कुण्डानां मूलमिति व्याख्या । उक्तं च "चतुरस्रमिदं प्रोक्तं सर्वकुण्डेषु कारणमिति" अत्र "समश्रुतौ तुल्यचतुर्भुजे च तथाऽऽयते तद्भुजकोटिघातः" क्षेत्रफलं षट्सप्तत्यधिकपञ्चशती ५७६ एतावदेव योन्यादिकुण्डेषु एकहस्तेषु यथा क्षेत्रफलं सम्पद्यते तथा वर्त्तितव्यमिति । अथ योनिकुण्डमाह "क्षेत्रे जिनांशे तु पुरःशरांशान् संवर्ध्य च स्वीयरदांश२२ युक्तान् । कर्णाद्धिमानेन त्रिकोणखण्डे प्रत्यक्पुरोऽङ्काङ्कृतोभगाभम्" । चतुरस्रक्षेत्रे चतुर्विंशतिधा भक्ते सति पञ्चांशान् स्वीयद्वाविंशदंशयुक्तान् अग्रे संवर्ध्य तत्चतुर्धा विभक्तस्य क्षेत्रस्य पश्चिमचतुरस्रद्वयमध्याङ्कात् कर्णसूत्रस्य चतुर्थांशेन प्रत्यक्पश्चिमभागे इन्दुखण्डे वृत्तार्द्धद्वयं चिह्नत् । लिख । ततः पूर्वाङ्काद्दक्षिणोत्तरसंलग्नं वृत्तार्द्धं यावद्दीयमानगुणद्वयतो भगाकारं योनिकुण्डं स्यादिति व्याख्या । अथ क्षेत्रफलानयनम् अत्र क्षेत्रत्रयं पूर्वाङ्काद्दक्षिणोत्तरसूत्राग्रं यावद्दीयमानसूत्रद्वयं त्रिकोणमेकं, तथा दक्षिणोत्तरसूत्राग्रात् पूर्वापरसूत्रान्तं यावद्दीयमानसूत्रद्वयादपरं त्रिकोणम् उभयवृत्तार्द्धे मिलित्वा एकं वृत्तमिति तृतीयं, क्षेत्रत्रयफलयोगे पूर्णफलम् तत्र प्रथमस्य क्षेत्रफलं यथा अत्र लम्बः अङ्गुलानि १७ यवः१यूका२ । भूः२४ "लम्बेननिघ्नं कुभुजैक्यखण्डमिति" । अत्र भुजाभावाद्भूमध्यमेव लम्बेन गुणितं सञ्जातं प्रथमं क्षेत्रफलम् अङ्गुलानि२०५ यवाः ७ । अथापरस्य लम्बः १२ भूः सैव अत्रापि तथैव रीत्या क्षेत्रफलं १४४। अथ वृत्तार्द्धयोरेकं वृत्तं तत्फलं यथा तत्र वृत्तव्यासः१६,७,४,१"व्यासस्य वर्गे भनवाग्निनिघ्ने सूक्ष्मं फलं पञ्चसहस्रभक्ते" इति आगतम्: २८८ ० । ० । २ । अथ भनवाग्नि ३९२७ निघ्नः पञ्चसहस्र ५०००भक्तोजातं क्षेत्रफलं वृत्तस्य २२६।१ । ४ । ५। त्रयाणां योगे क्षेत्रफलं पूर्णं ५७६।० । ४ । ५ । अत्र लिक्षापञ्चकं यूकाचतुष्टयञ्चाधिकम् अल्पान्तरत्वाददोषः । ध्वजायस्त्रिविधान्यप्रोक्ता । "स्थापने सर्व्वकुण्डानां ध्वजायः सर्वसिद्धिदः। शतांशेनाधिकं हीनं स्थापयेन्न दूषयेत् । आयदोषविशुद्ध्यर्थं क्रियते शास्त्रकोविदैरिति" । एतच्च क्षेत्रस्योत्तराग्रत्वात् उदीचीप्राचीवक्रवक्रसंख्या एवमन्ययोरपि । पदार्थादर्शे "चतुर्विंशतिधा मध्य क्षेत्रं भक्त्वा पुरोऽन्यसेत् । पञ्चांशान् वैकस्य त्रीन् विंशांशान् कोणपादतः । वृत्तार्द्धे द्वौ मध्यतिर्यक्सूत्रान्तस्य ततोऽर्पयेत् । पुरो वहिंस्तत्सूत्रान्तं, सूत्रे द्वे स्याद्भगाकृतिरिति"

सार्द्धभागाधिकं कल्पान्तरत्वाद्दोषः । अथ वा व्यासोमूलकृया न्यूनः कार्य्यः । ध्वजायविहितं । अथ वा त्रिभैस्तावता प्रकारेण चतुर्विंशांशं कुण्डक्षेत्रं द्वादशांशः तत्क्षेत्रफलं स्यात् द्वादशगुणितं पूर्व्वं क्षेत्रफलम् । अथेदं कुण्डं चतुर्व्वि विस्तारमानान्तरचितमिति नामैकेषामीयं ततः षट्कोणता समभुजताफलं च सम्पद्यते एव "भागाधिक्ये भवेद्रोगो मान हीने दरिद्रता" इत्यादिदोषापत्तिरपि नास्ति । अथ वक्तव्यं प्राचीनकृतकुण्डविरुद्धत्वादि दृश्यते च प्राचीनकृतकुण्डेषु परस्परविरुद्धता इदमेव कुण्डं रामवाजपेयिभिर्विषमभुजं षडङ्गाकारं कृतं राघवभट्टादिभिः समभुजमेव कारितं तत्सम्प्रदायाचार्य्ययोऽप्यन्यमतैरेव तस्मादत्र दृष्टे नैतत्रयोरे समभुजे क्षेत्रफलसंवादि इति षट्-कोणे विद्वद्भिर्नादरं भाव्यमिति । अथ ये प्राचीनकृतावेवाग्रहिणस्तेभ्यो नालीवायाऽपि समभुजमाह "अथ वा जिनभकृतकुण्डमानास्त्रिभागैः खखभूपभागहीनैः । मितकर्कटकोद्भवे तु वृत्ते विधुदिक्षः समवृत्तभुजैः षडस्रम्" अथवा चतुर्व्विंशतिभक्ते कुण्डमाने सति खोयषड्धिकशतभागेन हीनैः पञ्चदशभागैर्मितोयः कर्कटस्तदुद्भवे वृत्ते उत्तरदिक्षः ख्यापात् सैः षड्भुजैर्द्वैः परस्परसक्तैः षडस्रं वृत्तमार्जनेन भवतीति व्याख्या । अथ क्षेत्रफलानयनं तत्र पृत्तव्यासे हिरंभागे षडस्रे स्युर्भुजाः स्फुटा' इति भुजमानम् १४ । ७ । २ । २ क्षेत्रमध्ये दक्षिणोत्तरां रेखान्दत्त्वा ऊर्द्ध्वं भुजसंपाततः पूर्व्वापरं रेखाद्वयम् अधोभुजसंपातावधि दद्यात् एवं कृते चतुरस्रद्वयं परस्परसक्तं भवति पूर्व्वापररेखयोर्द्दक्षिणोत्तररेखया सहसम्पातचतुर्थांशे एव भवति सैवाबाधा तन्मानं ७।२।५ भुजः १४।७।२ "आबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः" इति साधितोलम्बः १२।७।१। अयमेव मध्यलम्बः "लम्बेन निघ्नं कु २९।६।४ सुखै १४।७।५।२ क्य ४४।५।६ खण्डम्" २२।२।७। इति जातं क्षेत्रफलं २८८।१।१।६ एवमपरस्यापि खण्डस्य । उभययोगे ध्वजायविहित्वेति । अथ पद्मकुण्डमाह "अष्टांशाद्य युतत्र हस्तपरके तत्ताद्विभे कर्णिकायुक्ते षोडश केशराणि चरमे स्यादन्तिभागोन्मिते । भक्ते षोडश केशराणि च कृते स्युः कर्कटेऽष्टौ दलाः सर्व्वेषाम् अन कर्णिका तत्र निजायामौच्चकं स्यात् कजम्" । क्षेत्रस्याष्टमांशादष्टांशादस्रा च बलपद्मके कृते सति तत्र पद्मकमध्ये प्रथमं तत्कर्णिका, द्वितीये षोडश केशराणि, द्वितीयं केशरस्थानविस्तारः । अन्तिमे पञ्चमे वृत्ते अष्ट चतुष्कलमयात्मकदलाग्रान्तिमं यद योनितस्य षोडशसु स्थानेषु दिक्षु विदिक्षु तदन्तराले च समतया भाजिते तस्मिन्वृत्ते पद्मचक्रान्तरे दिक्षु विदिक्षु च कर्कटके धृते सति परावर्त्तनेनाष्टौ पत्राणि जायन्ते सर्व्वेषाम् केशरादीनाम् केशरस्थलतीयचतुर्थवृत्तानि पत्राणि च द्वे विहृत्य ! अन कर्णिकां तत्र वा अन । कीदृशोन्निजः स्वकीयश्चायामो विस्तारस्तत्तुल्यमौच्चं यस्याः तां, कजं पद्मकुण्डम् बहिर्वृत्तमार्जनेन स्यादिति व्याख्या । अथ क्षेत्रफलानयनम् अन्त्योपान्तिमस्य चतुर्व्विंशतत्तद्वृत्तस्य पूर्व्ववत् क्षेत्रं ४५।२।२।१ अन्तिमहस्तस्यास्य २९।२।४। क्षेत्रफलं ६९९।४।५।०। अनयोरन्तरार्द्धम् १२२।४।६।० इदं पूर्व्वक्षेत्रफले योजितं वा अन्तिमहस्तक्षेत्रफलम् । प्रवर्त्तितं-यज्जातं पूर्व्वं फलं ५७६।०।१ ऊनोनं फलमायाततोऽदोषः । अन्तिमहस्ते विस्तारानयनं न्मेन ध्वजायविहितेति । अत्रान्तिमहस्ते पत्रान्तरार्द्धभूसम्पर्केऽर्द्धभूख्यागत बुद्धिमता प्रत्यक्षतएवोपलब्धव्यः । अथाष्टास्रिकुण्डमाह "क्षेत्रे जिनांशे गजचन्द्रभागैः स्वाष्टाग्नि—२८ भागेन युतैस्तु वृत्ते । विदिग्दिशोरन्तरतोऽष्टसूत्रैः तृतीयसूत्रैरिदमष्टकोणम्" । क्षेत्रचतुर्व्विंशतिभागे कृते सत्यष्टादशभागैः स्वीयाष्टाविंशेन युतैः कर्कटकेन वृत्ते कृते सति विदिग्दिशोर्मध्ये कृताष्टचिह्नेभ्यः अष्टभुजेभ्यस्तृतीयांशमितैः चिह्नद्वयं विधाय तृतीयचिह्नेन योजितैरष्टकोणं वृत्तमार्जनात्मष्टस्यात्यष्टदोःखण्डमार्जनाच्च भवतीति व्याख्या । अथ "क्षेत्रफलानयनं व्यासार्द्धं १८।५।१।० । व्यासः ३७।२।२। अथ "द्विद्विमन्दे भुजागरैर्व्यासे समाहते । खखखाभ्राकर्कभक्ते लभ्यन्ते क्रमशो भुजाः" इति १४।२ एतद्धृह्भुजमानं दक्षिणोत्तररेखा कोटिः जायते क्षेत्रे भुजकोटिघातः क्षेत्रफलम् । भुजकोटिज्ञानं तु इहभुजतुल्यं मध्येऽन्तरम् १४।२।२ याम्योत्तररेखोभयप्रान्तवर्त्तिरेखा खण्डमाने योजितं तत्कोटिः स्यात् यथा दक्षिणोत्तरपूर्व्वापररेखा खण्डयोगादूर्द्ध्वरेखातिर्य्यग्रेखे भुजकोटिरूपे तद्व्यासीयमानो महाभुजएव कर्णः १४।२।२।५।०। अस्य वर्गार्द्धमूलं तिर्य्यग्रूपभुजकोटिमानं लघुः १०।०।६।२। यतोऽत्र भुजकोटिवर्गयोगः कर्णवर्गो भवति इदं कोटिमानं द्विघ्नं सत् पूर्व्वभुजे योजितं जाता कोटिः दक्षिणोत्तररेखारूपा २४।२।५।४। एतद्धृह्भुजघातफलं ४९२ १।१।२। अथ कोणक्षेत्रयोः फलं लघुभुज—वर्णेन तुल्यमेतत् १०१।७।६। पूर्व्वफलादस्मात् ४९२।

मेखला:वा पद्मनालाकारत्वान्नालोक्तिः । अन्तर्मध्ये अश्वटीगर्त्तः स्रुचि घृतधारणार्थं यद्धस्तेन रुचिरा सुन्दरा वा अश्वत्थपत्राकृतिः स्यादिति व्याख्या । वायवीये "मेखलां मध्यतः कुर्यात् पश्चिमे दक्षिणेऽपि वा । शोभनां मध्यतः किञ्चिच्छिद्राणामुन्मीलितां शनैरिति" योनिर्मिति शेषः । क्रियासारे "दीर्घा सूर्याङ्गुला योनिस्त्र्यंशोना विस्तरेण तु । एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाऽभ्यन्तरे तथा । कुम्भद्वयार्द्धसंयुक्ता चाश्वत्थदलवन्मता । अङ्गुष्ठमेखलायुक्ता मध्ये चाज्यधृतिस्तथेति" पञ्चरात्रे "अर्काङ्गुलोच्छ्रितां योनिं विदध्यात्तावदायताम्" तावद्दीर्घाम् एकाङ्गुलोच्छ्रिता इत्यस्य विवरणम् अङ्गुष्ठमेखलायुक्तेत्यत्र अङ्गुलद्वयमुच्छ्रायः क्वचिदुक्तः अङ्गुलं परिधिरिति द्वादशाङ्गुलोच्छ्रायः अयं न प्रायोबहुसंमतपक्षः अतोऽस्मदुक्त एकाङ्गुलोच्छ्रायपक्षो बहुसंमतः कार्य्यः । शारदायाम्" "मूलादारभ्य नालं स्यादोष्ठ्या मध्ये वरभ्रमिति" द्वादशाङ्गुलमेखलापक्षे योनिलक्षणमाह "अथार्काङ्गुलपक्षे तु मेखलानान्द्व्याङ्गुलैः । विस्तृता तिथिभिर्दीर्घाङ्गुलिभिर्योनिरिष्यते" मेखलानां द्व्याङ्गुलैर्विस्तृता तिथ्यङ्गुलैर्दीर्घा योनिः स्यादिति व्याख्या । प्रयोगसारे "स्थितां प्रतीच्यामायामे सम्यक् पञ्चदशाङ्गुलाम् । द्विपञ्चाङ्गुलविस्तारां षट् चतुर्थ्यङ्गुलाः क्रमात् । त्रयोदशाङ्गुलोत्सेधां योनिं कुण्डस्य कारयेत्" । केचित् योनिक्षेत्रस्य दीर्घचतुरस्रक्षेत्रस्य यत्फलं तस्य मूलमानीय तावत्समचतुरस्रं संशोध्य योनिकुण्डवद्योनिं साधयेदित्याहुः" । अधिकं कुण्डार्कादौ दृश्यम् ।

"रसं पिबेत् कुमारोऽयं त्वत्प्रसादात् महाबलः । बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम् । यावत् पिबति बालोऽयं तावदस्मै प्रदीयताम्" । "एकोच्छ्वासात्तत कुण्डं पिबति स्म महाबलः । एवमष्टौ स कुण्डानि ह्यपिबत् पाण्डुनन्दनः" भा०आ० १२८अ० । "साधुभिर्गर्हितं कर्म चण्डालस्य विधीयते । तस्मात् गोरजसा ध्वस्तमपां कुण्डे निमज्जति" भा० आनु० १०१अ० । कण्डते कुलमनेन कुडि—दाहे करणे घञ् । अमृते भर्त्तरि ५जारजाते स्त्रियां टाप् । "परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ । पत्यौ जीवति कुण्डःस्यात् मृते भर्त्तरि गोलकः । तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च । दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम्" मनुः । "ब्राह्मणा एव संपूज्या पुत्रस्य स्वर्गमभीप्सता । श्राद्धकाले तु यत्नेन भोक्तव्याश्च जुगुप्सिता । दुर्बलाः कुनखी कुष्ठी मायावी कुण्डगोलकौ । वर्जनीयाः प्रयत्नेन काण्डपृष्ठाश्च देहिनः" भा० व० १९९अ० । "द्विजात् द्विजातिभार्य्यायां सवर्णायामुत्पन्नकुण्डगोलकयोः संस्कारार्हता यथाह "प्रयोगपारिजाते ब्राह्मे "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति स्मृतिः । तस्मात् षण्ढबधिरकुब्जवामनपङ्गुषु । जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु । मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये । ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् । मत्तोन्मत्तौ न संस्कार्य्याविति केचित् प्रचक्षते । कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः । तदपत्यञ्च संस्कार्य्यमपरे प्राहुरन्यथा । संस्कारमन्त्रहोमादीन् करोत्याचार्य्य एव तु । उपनेयाश्च विधिवदाचार्य्यस्य समीपतः । आनीयाग्निसमीपं वा सावित्रीं स्पृष्ट्वा वाचयेत् । कन्याग्रहीकरणादन्यत् सर्वं विप्रेण कारयेत् । एवमेव द्विजैर्जातौ संस्कार्य्यौ कुण्डगोलकौ" अतस्तस्य ब्राह्मणत्वेऽपि श्राद्धेऽन्नदाननिषेध इति विशेषः । अत्रेदं बोध्यम् । "अशुल्कोपहृतायां तु पिण्डदा वोढुरेव ते" इत्युक्तेः शुल्कदानं विना उपगतपरस्त्रियां जनतस्य वोढुरेव पुत्रत्वं शुल्कदाने तु उत्पादयितुरेवेति । अतएव "यस्मै माता प्रलुलोभ रेतः" इत्यादि श्रुत्या क्षेत्रिणएव पिण्डदत्वं भङ्ग्योक्तम् । अस्य प्रत्येन बहु समासे आद्युदात्तता । तेन निर्वृत्ताद्यर्थे चतुरर्थ्यां अश्मा० र । कुण्डर तन्निर्वृत्तादौ त्रि० कुडि—दाहे भावे अ । ६दाहे स्त्री ।

**कुण्डक** पु० धृतराष्ट्रपुत्रभेदे । "कुण्डकश्चित्रसेनश्च सुवर्चाः कनकध्वजः" भा०आ०१८६अ०, कुण्ड+स्वार्थे क । २कुण्डार्थे

**कुण्डकीट** पु० कुण्डे योनिकुण्डे कीटइव विचारशून्यत्वात् । १पतितब्राह्मणपुत्रे २जारजातब्राह्मणपुत्रे ३दासीकामुके ४चार्वाकवचनाभिज्ञे पुरुषे च मेदि० ।

**कुण्डगोलक** न० कुण्डे गोलं गोलाकारं कं जलमत्र । १काञ्जिके हेमच० । स०द्वन्द्वः । २कुण्डगोलकयोः समाहारे च ।

**कुण्डग** पु० कुण्डं तदाकारं गच्छति गम—बा०ड डिच्च । निकुञ्जिकाख्ये हेम० तस्य लतादिनाऽपिधानेन कुण्डाकारत्वात्तथात्वम् [ "च शताधिका" भा० आ० ६७अ० ।

**कुण्डज** पु० धृतराष्ट्रपुत्रभेदे "कुण्डजश्चित्रकश्चैव दुःशला

**कुण्डजठर** पु० कुण्डइव जठरमस्य । १कुण्डाकारोदरे २ऋ-

षिभेदे पु० "आत्रेयः कुण्डजठरोऽहिजः आवसटस्तथा" भा०आ० ५३अ०,

**कुण्डधार** त्रि० कुण्डं कुण्डाकारं धारयति धारि–अण् उप० स० । नागभेदे, "अविमान् कुण्डधारश्च कर्कोटकधनञ्जयौ" भा० स० ६अ०

**कुण्डपायिन्** पु० भूम्नि कुण्डेन कुण्डाकारचमसेन पिबन्ति सोमम् पा–णिनि । कुण्डेन सोमपायिषु यजमान गोत्रार्थकुलाध्ययनभेदकारिषु

**कुण्डपायिनामयन** न० ६त०अलुक् स० । सत्रभेदे तदिति-कर्त्तव्यतादिकम् आश्व०श्रौ०१२।५।१–सूत्रादौ उक्तं यथा "कुण्डपायिनामयनम्" सू० । "एतन्नामकमिदं सत्रमभिज्ञतं वेदितव्यम्" वृ० । "मासन्दीक्षिता भवन्ति" सू० । "अयं मासशब्द एकादशविंशतिरात्रे उपचरितः, एकादशविंशतिरात्रादिकं मासवद्भवतीत्यर्थः" वृ० । "ते मासि सोमं क्रीणन्ति" सू० । "अयमप्युपचार एव दीक्षाकाले । मासातीते दीक्षिताः सोमं क्रीणन्तीत्यर्थः" वृ० । "तेषां द्वादशोपसदो भवन्ति" सू० । "सात्विकानान्दीक्षाणामपवादो दीक्षाविधिः, तथा सात्विकानामुपसदामपवादोऽयमुपसद्विधिः" वृ० । "सोममुपनह्य प्रवर्ग्यपात्राण्युत्साद्योपनह्य वा मासमग्निहोत्रं जुह्वति" सू० । "उपसत्स्वतीतासु प्रवर्ग्यपात्राण्युत्साद्योपनह्य या तानि तानि, ते एकं मासम् अग्निहोत्रं जुह्वति सायं प्रातः" वृ० । "प्रातरुपक्रमः सायमपवर्गः" सू० "प्रातःकालस्य प्रथमप्राप्तत्वात् उपसत्काले द्वादशाहेऽतीतेऽग्निहोत्रस्य प्रातरारम्भात् नैमित्तिकादग्निहोत्रात् कर्म्मान्तरमेतदिति न्यायविदां प्रसिद्धम्" वृ० । "मासं दर्शपूर्णमासाभ्यां यजन्ते" सू० । "अग्निहोत्रमासेऽतीते, ततः अनन्तरमेकं मासं दर्शपूर्णमासाभ्यां यजन्ते" वृ० । "कृष्णपक्षेऽहरहः पौर्णमास्या, शुक्लपक्षेऽहरहरमावास्यया, विप्रायत्तयोरयने तथा दृष्टत्वात्" सू० । "एवमत्र सम्पादनीयम्—यथा कृष्णपक्षादौ पौर्णमास्याऽहः सम्भवन्ति, तत्र दीक्षारम्भः कर्त्तव्य इति" वृ० । "मासं वैश्वदेवेन" सू० । "अहरहरनेन यष्टव्यम् । वैश्वानरपार्जन्या तु न भवति आरम्भार्थत्वात्तस्याः, स चारम्भःसत्रे न प्रसक्त इति" वृ० । "मासं वरुणप्रघासैः मासं साकमेधैः एतैरहरहर्यजेरन्" सू० "एकाहेनापवृक्त प्रकृतेर्द्व्यहसमापनीयत्वाद्व्यहेन वा कुर्यात् । अध्वर्युप्रत्ययात्समापनमिति स्थितिः" वृ० । "मासं शुनासीरीयेण" सू० । "अनेनाप्यहरहरेव" वृ० । "षडहर्मासः पूर्य्यते तदहरिष्टिं समाप्याग्निप्रणयनादिश्रौतसूत्रादि औपवसथिकं कर्म्म कृत्वा श्वोभूते प्रसुनुयुः" सू० । "यस्मिन्नहनि मासः पूर्य्यते तस्मिन्नहनि शुनासीरीयेष्टिं समाप्य तदनन्तरं यदि पूर्व्वमेव प्रवर्ग्यपात्राण्युत्सादितानि तदाग्निप्रणयनाद्यौपवसथिकं कर्म्म कृत्वा सुत्यारम्भः" वृ० । "तद्वैक उपसद्भ्य ऊर्द्ध्वमनन्तरं कुर्व्वन्ति तथादृष्टत्वात् सौत्यामासानग्निहोत्रादीन् वदन्तः" सू० । "तदिदमग्निप्रणयनाद्यौपवसथिकं कर्म्म कुण्डपायिनामयने अग्निहोत्रादिमासेभ्यः कर्त्तव्यमित्युक्तम् तत्रैक आहुः तत्कर्म्माग्निहोत्रादिमासेभ्यः प्रागुपसद्भ्योऽनन्तरं कर्त्तव्यमिति । तत्र हेतुमाहुः प्रकृतौ तथादृष्टत्वादिति । न त्वग्निहोत्रादिमासेभ्य उपरिष्टात्, क्रियमाणे वा औपवसथिके सुत्यानन्तरत्व विद्यमानत्वादिति । तथादृष्टत्वात्साधारण्यमिति, तत्परिहारार्थमग्निहोत्रादिमासान् सौत्यानिति । कथम् ? अस्य सत्रस्य गवामयनप्रकृतिकत्वात्तस्य सांवत्सरिकत्वात् कुण्डपायिनामयने त्रिवृदादयः षण्मासा एकः पक्षः, अग्निहोत्रादयः षण्मासा अपरः पक्ष इति मन्यमानाः । एवं च उपसदाश्च सुत्याश्च सुत्ये औपवसथिकस्य कृतत्वान्न कश्चिद्दोष इति वदन्तोऽग्निहोत्रादिमासेभ्यः प्रागुपसद्भ्यः ऊर्द्ध्वमौपवसथिकं कुर्व्वन्ति । एतदुक्तम् भवति । अग्निहोत्रादिमासान् सुत्यानिति मन्यमानाः तेभ्यः पुरस्तादुपसद्भ्य ऊर्द्ध्वमौपवसथिकं कर्म्म केचित् कुर्व्वन्ति प्रकृतौ तथादृष्टत्वादिति । यदेतदग्निहोत्रादिमासान् सौत्यानिति वदन्ति तदनुपपन्नम् । कुतः ? सोमयागस्वरूपत्वात् सुत्यानाम् अग्निहोत्रादीनां तु हविर्यज्ञस्वरूपत्वादसुत्यत्वमिति । यत्पुनरिदमुक्तं गवामयनप्रकृतिकत्वादग्निहोत्रादिमासैः पूर्व्वपक्षनिर्वृत्तिरिति । तदयुक्तम् सोमयागानामेव गवामयनप्रकृतिकत्वं पूर्व्वपक्षस्योत्तरपक्षस्य चेति । अग्निहोत्रादयोऽस्मिन् सत्रे अप्राकृता आगन्तवः कर्म्मविशेषाः अतस्ते नान्तस्थानापन्नत्वमपि न सम्भवति । अतस्तेषां सुत्यत्वञ्च सम्भवति । सुत्यत्वासम्भवे तथादृष्टत्वादित्यस्य हेतोः साधारण्यादसाधकत्वादित्यनेनाभिप्रायेणोक्तं भगवताचार्य्येण 'तदनुपपन्नम् इति" वृ० "पञ्चमं त्वग्निप्रणयनस्य च श्वःसुत्यानिमित्तम्" सू० । "परोक्तस्य हेतोरसाधकत्वमुक्त्वा स्वपक्षं समर्थयति । औपवसथ्येषु कर्म्मसु यः पशुभागः सः श्वःसुत्यानिमित्तमिति प्रत्यक्षं श्रूयते 'अग्नीषोमाभ्यामिन्द्रो वृत्रमहन् यावेनमकृताम्' इत्यादिना । अतो वचनात् पशोः सुत्यानन्तर्य्यमेव स-

ख्यादनीयम्। तत्र यदग्निप्रणयनमन्तत् सोमयागार्थमेव यथोरप्युपकरोति प्रवङ्गादिति पञ्चर्थमित्युक्तम्। अतोऽग्निप्रणयनस्य पयोः स्वःसुत्यानन्तर्यमेव कर्तुं युक्तम्" द०। "अतिप्रणीतचर्यायां च वैगुण्यं दर्शपूर्णमासयोः तथाग्निहोत्रस्य" सू० "एवं तावदौपवसथिकस्य अग्निप्रणयनादेरग्निहोत्रादिमासेभ्य ऊर्द्धमेव कर्त्तव्यतां प्रतिपाद्येदानीमग्निप्रणयनस्याग्निहोत्रादिमासेभ्यः पुरस्तात् क्रियायां दर्शपूर्णमासयोरग्निहोत्रस्य च वैगुण्यं भवतीति प्रतिपादयति। कुतः? इति चेत्, प्रकृतौ नैयमिकेऽतिप्रणीते उत्तरवेद्यान्तयोर्योगादिदर्शनात्। अतो वैगुण्यकरत्वादग्निप्रणयनतावत् पुरस्तान्न कर्त्तव्यमित्यस्य विशेषोऽप्यभ्य इत्युक्तम्" द०। "यदो हविर्धानान्याग्नीध्रीयाग्निषोमप्रणयनवंसतीवरीग्रहणानि पञ्चर्थानि भवन्ति सुत्यार्थान्येके" सू०। "एवं तावदौपवसथिकेषु यः, सः स्वःसुत्यानिमित्तत्वादग्निहोत्रादिमासेभ्य ऊर्द्धं कर्त्तव्य इत्युक्तम्। अग्निप्रणयनस्य सुत्यार्थत्वात् पयोरप्युपकारकत्वाच्च पुरस्तात् क्रियायाश्चाग्निहोत्रादीनां वैगुण्यकरत्वाच्चेत्युक्तम्। इदानीं येषां स्वःसुत्यावचनं नास्ति स्मृत्यादिभिस्तु सुत्याङ्गभावोऽस्त्येव अङ्गभावश्च सन्निपत्योपकारद्वारेण, तेषां सुत्याकर्मणो ह्येशादिसाधन इत्यकल्पकरूपाणां सदआदीनामग्निहोत्रादिमासेभ्यः पुरस्तात् करणे किञ्चिददृष्टं दृष्टं वा प्रयोजनं नास्ति। तेषां पुरस्तात् करणे प्रमाणं च नास्ति, कुतः?" द०। "तत्कालास्त्वेव तदङ्गाः" सू०। "यस्य प्रधानस्य यः कालः स एव कालस्तदङ्गानां प्रधानकाल एव अङ्गानां मुख्यकाल इत्यर्थः। तदेतन्न्यायविदां प्रसिद्धम्। अत एव प्रसिद्धवदुपदिष्टवानाचार्यः 'तत्कालास्त्वेव तदङ्गाः' इति। एतदुक्तं भवति यस्मात् प्रधानकाला एव प्रधानगुणाः तस्मात् सदआदीनामग्निहोत्रादिमासेभ्यः पुरस्तादक्रियैव। तत्कालास्त्वेव तदङ्गा इति चशब्दोऽत्र पठितः प्रधानकाले च गुणाः कर्त्तव्या इत्यर्थः। सदआदीनामप्यर्थतावचनम् अभ्युपगम्य सदआदीनि पञ्चर्थानि वा भवन्तु, सुत्यार्थानि वा, सर्वथा तावदग्निहोत्रादिभ्यः पुरस्तात् क्रिया न स्यादित्ययमभिप्रायः। अङ्गानां प्रधानकालत्वमुक्तं 'तत्कालास्त्वेव तदङ्गाः' इति। यानि पुनरङ्गानि प्रधानकालाद्विप्रकृष्टानि, यथा 'अग्निमाहिताद्धूर्ध्वं मनुयाजैश्चरन्ति' इति तेषां पञ्चर्थता नास्ति लौकिकैः पदार्थैर्व्यवधानादिति। अतोऽन्तुयाजसङ्गानि कर्मान्तराणि सोमा-

कृत्येनैव विधीयन्त इति प्राप्ते उच्यते" द०। "विद्युत्स्वभावानां न व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्लवयोः" सू०। "प्रकृतौ विद्युत्स्वभावानां पदार्थानां विकृतौ पदार्थान्तरव्यवधानमात्रेण तेषामन्यत्वं न स्यात्। अनन्यत्वे च प्राकृतोपकारत्वे नाङ्गत्वमपि स्यात्। प्राकृतानां विकृतावुपकारद्वारेण हि पदार्थानां प्रायाणामानुपकारकत्वमित्ययुक्तं यदि परं व्यवधानादन्यत्वं भवति। अतो विप्रकृष्टकाला अपि पदार्थास्तदङ्गा एव भवन्ति, तद्युपगमादिति कर्मान्तरत्वपक्षे वाक्यभेदादिति प्रसङ्गेऽत्र। यथा पृष्ठ्याभिप्लवयोरिति व्यवधानादन्यत्वाभावे दृष्टान्तः। यथा पृष्ठ्यस्य वाभिप्लवस्य वान्यस्य वा पङ्क्ते कूर्पविशेषस्य मध्ये यजमानमरणस्य निमित्तेन नैमित्तिकमहरन्तरमुपजायते तत्र तेन व्यवधानमस्ति, नचा पृष्ठ्यादिषड्हातविशेषबुद्धिर्नापैति तद्वत्सार्थेति। यस्मात्तु व्यवधानात् पदार्थान्यत्वं नास्ति, अत एकौपवसथिकस्याग्निहोत्रादिमासेभ्यः पुरस्तात् क्रियाप्रसङ्गनिराकरणार्थमिदं प्रकरणमारब्धम्। कानिचिदङ्गानि तत्कालानि कानिचिद्विप्रकृष्टकालानीत्येवमुभयथा व्यवहारोऽस्ति। सर्वथा तावदग्निहोत्रादिमासेभ्यः पुरस्तादौपवसथिकं न कर्त्तव्यमिति प्रकरणार्थः" द०। "सगुणानां त्वेव कर्मणामुद्धार उपजनो वा" सू० "अयमप्यग्निहोत्रादिमासेभ्यः उपरिष्टादौपवसथिकक्रियायां हेतुः। यस्मात् प्रधानकर्मणामुद्धारे उपजने-उत्कर्षे च सगुणानामेव सर्वलोकाचारादिदृष्टः यथा स्नानभोजनविहाराणामहरहः कार्याणां कस्मिंश्चिदुद्धारे सगुणस्यैवोद्धारो दृष्टः,उत्कर्षे च सगुण एवोत्कृष्यते, एतेषां नित्यकार्याणामन्तराले अनन्यनैमित्तिकमुपजायमानं सगुणमेवोपजायते,एवमत्रापि यैर्योगिकैरग्निहोत्रादिभिरनुष्ठानार्थं सौम्यं कर्म आत्मनो गुणभूतेन औपवसथिकेन सहोत्कृष्यते। किमत्र: प्रसिद्धौ। यस्मात् सर्वत्र उद्धारोपजनोत्कर्षाः सगुणानामेव दृष्टाः तस्मादत्रापि सगुणस्य सौम्यस्य उत्कर्षो युक्त इति सूत्रार्थः" द०। "सत्रसङ्गपत्ता त्वानन्तम्" सू०। "प्रासङ्गिकोऽयं सत्रसङ्गपत्तिविचारः प्रकृतानुपयुक्तत्वाकालत्वात्। सत्रसङ्गपत्तायाः अग्निहोत्रादिमासानाम्च सत्योपपदभावात् सत्रसङ्गपत्ताया अभावशङ्का स्यात्, तत्र इदमुच्यते। सत्रसङ्गपत्ताया अयं विशेषः। आनन्त्यं-नित्यं कर्त्तव्या, अग्निहोत्रादिमासेष्वपि अप्राकृतोऽप्यङ्गाव इति मोत्प्रष्टव्या। अनवच्छिन्नेककालसंयत्वात्। प्रकृतावप्यनुष्ठानकाला यतो सत्रसङ्गपत्ता

न कालविशेषविशिष्टाऽऽहूयते। इह पुनरप्राकृतत्वात्कालस्य तेनोपलक्षणं प्रकृत्या सुब्रह्मण्याया अनुक्तमिति मन्त्रनामेनानश्रुता कालचतुर्थ्यविशेषणाऽऽज्ञातव्या। सुत्यामागच्छेति कालसंशयत्वादित्यभिप्रायमर्थः। प्रकृतौ द्वादशाहे सुत्यानीत्यादयःचतुर्थ्यविशेषाः क्रियापदचतुर्थ्यविशेषप्रयुक्ताः आहोस्वित्प्रकृत्यावन्त्यहानि। तत्र तदहःचतुर्थ्यप्रयुक्ता इत्येवङ्कालसंशयत्वादित्यर्थः" सू०। "उत्सर्गमेके सुत्योपसद्व्यत्वात्" सू०। "सुब्रह्मण्याया उत्सर्गमेके इच्छन्ति सुत्योपसद्व्यत्वात्। किमिदं सुत्योपसद्व्यत्वमिति? सुत्यानामेवायङ्को नोपसदां क्रमाच्छिङ्गं बलीय इति। अतोऽयमुपसदाङ्गञ्च उपसत्कालवर्तित्वात् उपसद्व्यत्वोपचारः अग्निहोत्रादिमासानामसुत्यत्वात् उपसत्कालत्वात् सुब्रह्मण्योत्सर्गमेके आहुरित्यर्थः" सू०। "क्रिया त्वेव प्रकृते ह्यन्तमनत्वाऽवस्थाने दोषः"सू०। "अस्याः क्रियैव निर्धीयते सोमयागसाधनसंस्कारत्वात् मन्त्रस्य, प्रकृतौ सोमयागादूर्ध्वं यावत्सुत्याकालस्तावदाहूयते। तद्वदत्राप्याज्ञातव्या। तावतः-कालस्योपसत्त्वेनैतत्सम्बन्धादस्या उपसत्सम्बन्धः तदभावादस्यास्त्यागो युक्तः। अत्रायमपि विशेषोऽस्ति। औचित्यादपि न त्याज्या। आदितआरभ्य सर्वेष्वेवाहःस्वाह्वयन्ति कथमिदानीं नाह्वयन्ति। नूनमयं सोमोऽसमृद्ध दास्यत इति देवतायाः शङ्का स्यात् तन्निवृत्त्यर्थमाज्ञातव्या। प्रारब्धस्य मध्ये त्यागस्य कारणाभावात् त्यागे दोष एव स्यादित्यभिप्रायः। परपदार्थविचारोऽत्र स्वपदार्थपरिज्ञानार्थ एव। अतिप्रैषः समुत्यच्छमोहन इति" सू०। "त्रिवृता मासं पञ्चदशेन मासम् सप्तदशेन मासम् एकविंशेन मासम् त्रिणवेन मासम् त्रयस्त्रिंशेन मासम्। द्वादशाहस्य दशाहानि। महाव्रतम्रातिरात्रश्च"सू०। "अत्र ष्टोमस्य षड्भिरहोभिः पञ्च मासाः कर्त्तव्याः। षष्ठेनाष्टादशाहानि दशरात्रौ महाव्रतमुदयनीयः।अनुक्तोक्तत्वाच्चात्र प्रायणीयः"सू०। "सर्वे वा यज्ञेन यजन्ते य एतदुपयन्ति"सू०। "स्तुतिवादोऽयं बहूनामत्र सम्भवात्तर्त्विक्समासोऽनेन सूत्रकारेण न सूत्रितः। स कर्त्तव्यश्चेत् परमतवादेव कर्त्तव्यः" नारायणवृत्तिः कात्या०श्रौ० २४,४,२, सूत्रादौ विशेष उक्तो यथा "कुण्डपायिनामयनं पौर्णमासीदीक्षम्" सू०। कुण्डपायिनामयनमिति सत्रस्य संज्ञा तस्य पौर्णमास्यां दीक्षा भवति" कर्कः।"चतुर्थ्यां वाऽपरपक्षस्य"सू०। इति विकल्पः फाल्गुन्यापरपक्षस्य वा चैत्र्यां पौर्णमास्यामिति" कर्कः "मासं दीक्षाः"सू०। "तस्य भवन्ति"कर्कः। "सोमक्रयणस्य सुत्यास्थानेषु मासमग्निहोत्रं जुहोति" सू०। सोमोपनहनं कृत्वा यानि सुत्यास्थानानि तेष्वग्निहोत्रहोमः। अग्निहोत्रं च सायारम्भं प्रातरपवर्गम् तत्र द्वावपि होमौ कालैक्यात्तन्त्रेणोपक्रमितव्यौ। प्रधानस्य तु भेदः चतुर्गृहीतेनाग्नेयीं सायमाहुतिं कृत्वा पुनश्चतुर्गृहीतेन सौरीमाहुतिं जुहोति तन्त्रेणोत्तरां जुहोति। गार्हपत्यकार्य्यं तत्र प्रागभिहितएव न शालाद्वार्य्ये, ज्योतिष्टोमे हि तच्छ्रुतम् न चाग्निहोत्रं ज्योतिष्टोमः न च तदङ्गत्वमिति आहवनीयस्यातिप्रणीत एव" कर्कः "सोमबन्धनपूर्वकम् अत्राग्निहोत्रयज्ञोनित्याग्निहोत्रधर्मातिदेशार्थः ततश्च तद्धर्मकं कर्मान्तरं मासपूर्तिपर्य्यन्तं प्रत्यहं भवति"सं०व्या०। "दर्शपूर्णमासाभ्यां मासम्" सू०। "यजेयुः"कर्कः। "पक्षादौ यथर्त्तविकल्पवर्षस्मिन्" सू०। "पक्षस्यादौ प्रतिपदि यथर्त्तविकल्पदेव वर्षस्मिन् पक्षे भवति सकले शुक्ले दर्शेष्टिः, सकले कृष्णे पौर्णमासेष्टिः"सं०व्या०। "सारस्वते च प्रथमे" सू०।"एवमेव"कर्कः "तन्त्रेण वा समस्तचोदितत्वात्" सू०। "यावज्जः पक्षस्याहनी तन्त्रेणैव दर्शपूर्णमासौ कर्त्तव्यौ समस्तयोर्हि चोदना"दर्शपौर्णमासाभ्यां मासमिति" नह्यत्र कालभेदकः तस्मादग्निहोत्रवदत्रापि तन्त्रमेव" कर्कः "न दर्शपौर्णमासस्य पक्षभेदेनानुष्ठानम् किं तर्हि तन्त्रेण कर्तव्यौ"कुतः? समस्तचोदितत्वात् समस्तयोरेव दर्शपौर्णमासयोः प्रत्यहं मासपर्यन्तं विहितत्वात् सारस्वते तु पक्षभेदेनैव, तत्र तथैव विधानात्"सं०व्या०।'अग्निहोत्रं च"सू०। "अस्य सूत्रस्य पूर्वमेवाभिहितो न्यायः" कर्कः तन्त्रेण न तु नित्याग्निहोत्रवत्सायम्प्रातः पृथक्पृथगिति अतो दिवसे एव सायम्प्रातस्तनमग्निहोत्रं तन्त्रेणैव होतव्यम् एककालत्वादङ्गानि तन्त्रेण प्रधानाहुतयस्तु भिन्नाः" सं०व्या०।"पृथङ्मासाश्चातुर्मास्यपर्वभिः" सू० "मीयन्ते वैश्वदेवेन मासम्" "वरुणप्रघासैर्मासम् साकमेधैर्मासम् शुनासीरीयेण मासमिति ताण्ड्य० श्रुतेः" कर्कः। "पृथक् पृथक् चत्वारो मासा नेयाः" सं०व्या०। "साकमेधा दर्शपूर्णमासवत्" सू०। "तन्त्रेणोक्तो न्यायः" कर्कः। "होमा वा साम्नाम्यात्"सू०। "एते अग्निहोत्रादयः होमा वा भवन्ति कुतः साम्नाय्यात् सत्रं हि सोमयागैः पूरणीयम्" सं०व्या०।"न जुहोतिचोदनात्"सू०।'नैतदेवम् होमा इति कुतः?

शिष्यत" इति नित्याक्लिन्नाम्नायेऽपि "सर्व्वत्रावच्छिन्नाप्येषा कामिनीषु विशेषतः । प्रकाशते तत्प्रकाशामतिष्ठन्तिं न कारयेदिति" अञ्जसा तत्त्वेन योगिनां हृदयाम्भोजे नृत्यन्तीत्यस्य तैरेव गुरूपदेशेन ज्ञायते इत्यर्थः । "इत्यत्र तैरेव सा देवी सदा देशकदेशितैरित्युक्तेः सर्व्वभूतानाम् आधारे मूलाधारचक्रे स्फुरन्ती अनेन स्थाननिर्देशः विद्युदाकृतिरित्यनेन ध्यानमुक्तं यदाहुः"तडित्कोटिप्रख्यां स्वरुचिजितकालानलरुचिमिति" अथ शानेन अनेकशब्दोत्पत्तिहेतुत्वेनानेकधा भवतीत्युक्तं शङ्खमध्ये य आवर्त्तः स यथा शङ्खमध्यमाहत्य तिष्ठति तद्वदियमपि देवीत्यर्थः । इदमवान्तरवाक्यं भिन्नमेव शङ्खेति कुण्डलीत्यनयोर्हेतुहेतुमद्भावेन योजना । कुण्डलीभूता कुण्डलाकारतां प्राप्ता ये सर्पा तथाभूता । केचन कुण्डलीति भिन्नं पदं वर्णयन्ति भूतानि सर्पाश्च ते यथा कुटिलगतयस्तद्वदियमपीत्यर्थः इति तत्र कुण्डली परदेवतेत्यनेन पुनरुक्तिः । सर्व्वदेवमयीति देवव्याप्तिः दीव्यतीति देवी तेजोरूपेत्यर्थः अनेन तेजोव्याप्तिः । सर्व्वमन्त्रमयीति मन्त्रव्याप्तिः । शिवा शिवरूपेत्यर्थः यद्वा शिवा कल्याणरूपा । साक्षात् सर्व्वतत्त्वमयीति तत्त्वव्याप्तिः । सूक्ष्मा सूक्ष्मतरा विभुरिति विरोधः परिहारस्तु सूक्ष्मा स्वरूपतः सूक्ष्मतरा दुर्ज्ञाना यद्वा सूक्ष्मात् त्रसरेणोरपि सूक्ष्मतरा अणुतरा अनेन अण्वादिव्याप्तिर्दर्शिता तदुक्तं "बालाग्रस्य सहस्रधा विदलितस्यैकेन भागेन या सूक्ष्मत्वात् सदृशी त्रिलोकजननीति" विभुः इयत्तया ज्ञातुमशक्या । त्रिधामेति सूर्य्यसोमाग्निरूपा । यद्वा त्रिधामेति स्थानत्रयं पातालभूस्वर्गरूपा अनेन स्थानव्याप्तिर्दर्शिता द्विचत्वारिंशद्वर्णात्मा भूतलिपिमन्त्रमयी पञ्चाशद्वर्णरूपिणीति मातृकामयी" ।

तस्या ध्यानादिकमुक्तं प्रयोगसारे यथा

"मूलाधारे कुण्डलिनीं ध्यात्वा संपूजयेन्नरः । ध्यानं तस्याः प्रवक्ष्यामि येन योगी प्रजायते । प्रसुप्तभुजगाकारां स्वयम्भूलिङ्गमाश्रिताम् । विद्युत्कोटिप्रभां देवीं त्रिवलयसमन्विताम् । स्वङ्कारादिरसोल्लासं सर्व्वदा कारणप्रियाम् । एवं ध्यात्वा कुण्डलिनीं ततो यजेत् समाहितः । मनसा गन्धपुष्पाद्यैः संपूज्य वाग्भवं जपेत् । ततो वै तोषयेत्तान्तु स्तवेनानेन साधकः । "रुद्रयामले" च प्रातः समुत्थाय पशुकृत्यमपरिहृतः । गुरुरूपां चरणाम्भोजं सहस्रं शीर्षपङ्कजे । विभाव्य पुनरेवं हि श्रीपदं भावयेद्धृदि । पूजयित्वा च विविधैरुपचारैर्नमेत् स्तवैः । त्रैलोक्यं तेजसा व्याप्तां सदाकुलस्थां महोत्सवाम् । तडित्कोटिप्रभादीप्तिं चन्द्रकोटिसुशीतलाम् । सार्द्धत्रिवलयाकारां स्वयम्भूलिङ्गवेष्टिताम् । उत्थापयेन्महादेवीं महावज्रां मनोन्मनीम् । सार्द्धोच्छ्वासादुद्गच्छन्तीं द्वादशाङ्गुलरूपिणीम् । योगिनीं खेचरीं वायुरूपां मूलाम्बुजस्थिताम् । चतुर्व्वर्णस्वरूपां तां वकारादिसान्तकाम् । कोटिकोटिसहस्रार्ककिरणोज्ज्वलमोहिनीम् । महासूक्ष्मपथप्रान्तरन्तरान्तरगामिनीम् । त्रैलोक्यरचितां वाक्यदेवतां शब्दरूपिणीम् । महाबुद्धिप्रदां देवीं सहस्रदलगामिनीम् । महासूक्ष्मपथे तेजोमयीं मृत्युस्वरूपिणीम् । कालरूपां ब्रह्मरूपां सर्व्वत्र सर्व्वचिन्मयीम् । ध्यात्वा पुनःपुनः शीर्षे सुधाब्धौ विनिवेशिताम् । सुधापानं कारयित्वा पुनःस्थाने समानयेत् । समानयनकाले तु सुषुम्णामध्यमध्यके । अमृताभिप्लुतां कृत्वा पुनःस्थानेषु पूजयेत् । ऊर्द्ध्वोद्गमनकाले तु महातेजोमयीं स्मरेत् । प्रतिप्रयाणकाले तु सुधाधाराभिराप्लुताम् । कुलकुण्डलिनीं देवीममृतानन्दविग्रहाम् । ध्यात्वा ध्यात्वा पुनर्ध्यात्वा सर्व्वसिद्धीश्वरो भवेत् । तस्मिन् स्थाने महादेवीं विभाव्य किरणोज्ज्वलाम् । अमृतानन्दमूर्त्तिं तां पूजयित्वा शुभां मुदा । मानसोच्चारबीजेन मायां वा कामबीजकम् । पञ्चाशद्वर्णमालाभिर्जप्त्वानुलोमतस्तथा । विलोमेन पुनर्जप्त्वेति

**कुलक** पुं० कु+लक–आप्तौ भावे घञ् । करताल्याम् हारा० ।

**कुलक्षया** स्त्री कुलस्य क्षयो यस्याः । १मूर्वामञ्जर्यां शब्दचि० दृत० । २कुलनाशे पुं० । "कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम्" । "कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः" गीता ।

**कुलघ्न** त्रि० कुलं हन्ति हन–टक् । वंशघातके । "सङ्करो नरकायैव कुलघ्नानां कुलस्य च । पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः । दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः । उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः । उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ! । नरके नियतं वासो भवतीत्यनुशुश्रुम" गीता । तत्र यथोत्तरं कार्य्यमुक्तं तत्रैव "कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः । धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत । अधर्म्माभिभवात् कृष्ण ! प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसङ्करः । सङ्करो नरकायैव कुलघ्नानां कुलस्य च" एतदुत्तरं कुलघ्नशब्दे दर्शितम्

**कुलज** त्रि० कुले सत्कुले जायते जन–ड । १सत्कुलोद्भवे । २कुलपालिकायां स्त्री टाप् शब्दरत्ना०

**कुलञ्ज** पु० कुं पृथिवीं रञ्जयति रञ्ज–णिच् अण् रस्य लः । कुलञ्जनशब्दे राजनि०मन्द्राऽल्यु । कुलञ्जनोऽप्यत्र "कुलञ्जनः कटुस्तिक्तः उष्णश्च दीपनस्तथा । मुखदोषविनाशी च" राजनि० तद्गुणा उक्ताः

**कुलटा** स्त्री० कुलात् कुलान्तरं व्यभिचारार्थमटति अट–अच् शक० । व्यभिचारिण्यां स्त्रियाम् । या तु भिक्षार्थं कुलमटति सा कुलाटा इति तत्र न शक० । इति भेदः

**कुलटी** स्त्री कुत्सितं रट्यते रट–भाषणे घञर्थे क गौरा० ङीष् रस्य लः । मनःशिलायां रत्नमा०

**कुलतन्तु** पु० कुलस्य तन्तुरिव । कुलावलम्बने "मया च सत्यवत्या च कृष्णेन च महात्मना । समवस्थापितं भूयो युष्मासु कुलतन्तुषु" भा०आ० ११०अ०

**कुलतिथि** स्त्री द्वितीयाषष्ठीदशमीभिन्नासु समतिथिषु चतुर्थ्यष्टमीद्वादशीचतुर्दशीषु यथोक्तं तन्त्रसा० "द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् । विषमाश्चाकुलाः सर्व्वाः शेषाश्च तिथयः कुलाः"

**कुलत्थ** पु०कुलं भूलग्नं सत् तिष्ठति स्था–क पृषो० । १कलायभेदे (कुलथकलाइ) २वनकुलत्थे स्त्री टाप् रत्नमा० । तत्पर्य्यायादि भावप्र० उक्तं
"कुलत्थिका कुलत्थश्च कथ्यन्ते तद्गुणा अथ । कुलत्थः कटुकः पाके कषायः रक्तपित्तकृत् । लघुर्विदाही वीर्य्योष्णः श्वासकासकफानिलान् । हन्ति हिक्काश्मरीशुक्रदाहानाहान् सपीनसान् । स्वेदसंग्राहको मेदोज्वरकृमिहरः परः ।" भावप्र० कुलत्थिकेति निर्देशात् स्त्रीत्वमपि सा च उपचारात् ३तद्युत्याञ्जने ४वनकुलत्थायां च स्त्री राजनि० "कुलाली लोचनहिता चक्षुष्या कुम्भकारिका कुलत्थिकेति" राजनि० वनकुलत्थपर्य्याये उक्तेः । स्वार्थे क । तत्रैवार्थे राजनि० कुलत्थे भावप्र० संज्ञायां कन् । कुलत्थाञ्जनाकारप्रस्तरभेदे अमरः ।

**कुलत्थाञ्जन** न० कुलत्थया कृतमञ्जनम् । अञ्जनभेदे "मलापहारि चक्षुष्यं कषायं कटुकं हिमम् । विषविस्फोटककण्डूनां नाशकं व्रणदोषहृत्" राजनि० तद्गुणा उक्ताः

**कुलदीप** पु० कुले कुलाचारे विहितोदीपः तन्त्रसारोक्ते कुलाचाराङ्गे १दीपभेदे "अर्केन्दुवितयाट्टालह्णनिर्म्मितवर्त्तिकम् । प्रदीपं तत्र संस्थाप्य अष्टसप्त प्रपूजयेत् । कृते तस्मिन् कुलदीपे विघ्नैश्च परिभूयते । तदवश्यं महेशानि निवेशयेत् कुलदीपकम्" कुलं दीपयति अण् उप०स० । २कुलप्रकाशके कुलश्रेष्ठे त्रि०

**कुलदेवता** स्त्री० कुले पूज्या देवता । १कुलक्रमेणोपास्य देवतायाम् गौर्य्यादिषु षोडशसु मातृषु मध्ये २मातृभेदे च । ताश्च स्मृतिपरिशिष्टे उक्ता यथा "गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह । आदौ विनायकः पूज्यो अन्ते च कुलदेवता"
स्त्री कुलैः कुलाचारैरुपास्या देवी । १तन्त्रोक्ते देवीभेदे कुलदेवताश्च तन्त्रसा० उक्ता यथा
"त्रिपुरा त्रिपुरेशी च सुन्दरी पुरसुन्दरी । श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी । प्रकटाख्या तथा गुप्ता तथा गुप्ततरा परा । सम्प्रदायाकुला कौला रहस्यातिरहस्यगा । परम्पररहस्या च तथा कामेश्वरी शुभा । भगमाली नित्यक्लिन्ना भैरवी वज्रिसुन्दरी । महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी । नित्या नीलपताका च विजया सर्व्वमङ्गला । ज्वालांशुमालिनी चित्रा वज्रिणी शुभगाकुला । पूर्णाख्या च तथा यतुषा कामिनी मोहिनी तथा । विमला वरुणा देवी जयिनी कुलभैरवी । सर्व्वेश्वरी तथा कौली वागिनी सर्व्वकामिनी । सिद्धेश्वरी तथा घोरा दुर्गा महिषमर्द्दिनी । स्वप्नावती शूलिनी च मातङ्गी सुरसुन्दरी । महाकाली महोग्राच चित्ररूपा महोदरी । प्राणविद्या तथैकाक्षी चैकपादा महारूपा । वामा शिवा तथा ज्येष्ठा सुरूपा चारुहासिनी । त्रिखण्डा त्रिशिरा गौरी विन्ध्याचलनिवासिनी । क्षोभिणी मोदिनी भद्रा ललिता बहुरूपिका । सर्व्वसम्पत्करी तारा भवानी विघ्नकारिणी । कुलेश्वरी महाविद्या कथिता तव भैरव !" । कुलैः कुलजैरुपास्या देवी २वंशपरम्परया उपास्ये देवीभेदे च

**कुलद्रुम** पु० "श्लेष्मातकः करञ्जश्च बिल्वाश्वत्थकदम्बकाः । निम्बो वटोडुम्बरौ च धात्री चिञ्चा दश स्मृताः" इत्युक्तेषु श्लेष्मातकादिषु दशसु [ वंशरक्षके पुत्रे त्रिका०

**कुलधारक** पु०कुलं धारयति स्थिरीकरोति धृ–णिच्–ण्वुल्

**कुलधुर्य्य** त्रि० कुलेषु धुर्य्यः सप्त० । कुलश्रेष्ठे

**कुलनक्षत्र** न० "वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम् कुलानि समधिष्ण्यानि शेषाणि चाकुलानि वै" तन्त्रसा० उक्तेषु वारुणाभिजित्कार्द्राविंशतिनक्षत्रमध्ये आर्द्राभिन्न समसंख्यकेषु नक्षत्रेषु तत्फलञ्चोक्तं तत्रैव "तिथ्यादि"

मध्यमे अकुले स्याद्विलोमयम् । कुलाख्ये जयिनो नित्यम् साम्यञ्चैव कुलाकुले"

**कुलनायिका** स्त्री०तन्त्रोक्ता कुलैः सेव्या नायिकाभेदे । शक्तिसङ्गमतन्त्रे १पटले तद्भेदादिकमुक्तं यथा
"नटी कापालिकी वेश्या रजकी नापिताङ्गना । ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका । मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः । विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः । रूपयौवनसम्पन्ना शीलसौभाग्यशालिनी । पूजनीया प्रयत्नेन ततः सिद्धिर्भवेद्ध्रुवा" । अत्र विशेषयति निरुत्तरतन्त्रे १४पटले । "नटी कापालिकी वेश्या रजकी नापिताङ्गना । योगिनी श्वपची शुण्डी भूमीन्द्रतनया तथा । गोपिनी माल्यकारस्य कन्या कार्य्यविभेदतः । चतुर्वर्णोद्भवा रम्या कापाली सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य वेशाचरणमिच्छति । चतुर्वर्णोद्भवा रम्या सा वेश्या परिकीर्त्तिता । पूजाद्रव्यं समालोक्य रजोऽवस्थां प्रकाशयेत् । सर्ववर्णोद्भवा रम्या रजकी सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य कुलजा वीरमाश्रयेत् । संत्यज्य पशुभर्त्तारं कर्म्म चाण्डालिनी स्मृता । विपरीतरता यत्नात् पात्रं या परिपृच्छति । सर्ववर्णोद्भवा रम्या सा शौण्डी परिकीर्त्तिता । सर्वदा यन्त्रसंस्कारो यस्याश्च परिजायते । भूमीन्द्रजा तु रम्याऽसौ सर्ववर्णोद्भवा प्रिये ! । आत्मानं गोपयेद्या च सर्वदा पशुसङ्कटे । सर्ववर्णोद्भवा रम्या गोपिनी सा प्रकीर्त्तिता । पूजाद्रव्यं समालोक्य या मालां परिकीर्त्तयेत् । सर्ववर्णोद्भवा रम्या मालिनी सा प्रकीर्त्तिता" । वेश्याया विशेषस्तु तत्रैवोक्तः । "गुप्तवेश्या महावेश्या कुलवेश्या महोदया । राजवेश्या देववेश्या ब्रह्मवेश्या च सप्तधा । कुलजा गुप्तवेश्या स्यात् निर्लज्जा मदनातुरा । पशुभर्त्राश्रिता लोके गुप्तवेश्या प्रकीर्त्तिता । कुलजा कुलवेश्या स्यात् महावेश्या प्रकीर्त्तिता । भगलिङ्गकलाभिज्ञ चुम्बयेच्च पुनः पुनः । एवंविधा कुलीना चेत् ब्रह्मवेश्या प्रकीर्त्तिता । दिव्यशक्तिर्वीरशक्तिस्ताश्च सङ्के प्रकीर्त्तिता । चतुर्वर्णोद्भवानाञ्च सङ्गिताः परिभाषिताः । वेश्यायद्भ्रमते यस्मात् तस्माद्वेश्या प्रकीर्त्तिता । वर्णसङ्करतो जाता सर्ववेश्या प्रकीर्त्तिता" । कुलकामिन्यादयोऽप्यत्र

**कुलनाश** पुं० ६त० । कुलध्वंसे तत्कारणं कुलशब्दे उक्तम् तदभावकारणञ्च "यावच्च वेदधर्म्माः स्युर्यावत् शास्त्रकुरार्च्चनम् । यावत् शास्त्रञ्च क्रमश्च तावन्न कुलनाशनम् ।

कुलं भूलग्नं नाशयति न+अश+अच् उप् इष्टेति समासः । उष्ट्रे पुंस्त्री० हेमच० तस्योन्नतकन्धरतया उन्नतप्रदेशस्थकण्टकादेर्भक्षणाद्गुल्मादेरभक्षणेन तथात्वम् स्त्रियां जातित्वात् ङीष् ।

**कुलनाशन** न० कुलं नाश्यतेऽनेन नश–णिच्–करणे ल्युट् । वंशध्वंससाधने । "मुसलं कुलनाशनम् । यथा च मुसलेन वृष्णिप्रभृतिकुलनाशनं तथा भा०मौ०१अ०उक्तं यथा
"विश्वामित्रञ्च कण्वञ्च नारदञ्च तपोधनम् । सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान् । ते तान् साम्बं पुरस्कृत्य भूषयित्वा स्त्रियं यथा । अब्रुवन्नुपसङ्गम्य दैवदण्डनिपीडिताः । इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः । ऋषयः साधु जानीत किमियं जनयिष्यति । इत्युक्तास्ते तदा राजन् विप्रलम्भप्रधर्षिताः । प्रत्यब्रुवंस्तान् मुनयो यत्तच्छृणु नराधिप ! । वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम् । वासुदेवस्य दायादः साम्बोऽयं जनयिष्यति । येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः । उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ । समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः । जरा कृष्णं महात्मानं शयानं भुवि भेत्स्यति । इत्यब्रुवन्त ते राजन् ! प्रलब्धास्तैर्दुरात्मभिः । मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम् । तथोक्त्वा मुनयस्ते तु ततः केशवमभ्ययुः । अथाब्रवीत्तदा वृष्णीन् श्रुत्वैवं मधुसूदनः । अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् । एवमुक्त्वा हृषीकेशः प्रविवेश पुरं तदा । कृतान्तमन्यथा नैच्छत् कर्त्तुं स जगतः प्रभुः । श्वोभूतेऽथ ततः साम्बो मुसलं तदसूत वै । येन वृष्ण्यन्धककुले पुरुषा भस्मसात्कृताः । वृष्ण्यन्धकविनाशाय किङ्करप्रतिमं महत् । असूत शापजं घोरं तच्च राज्ञे न्यवेदयन् । विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् । तच्चूर्णं सागरे चापि प्राक्षिपन् पुरुषा नृप !"
चूर्णीकृतस्य तस्य मुसलस्य एरकाभावसङ्गा एरकाभूतेन मुसलेन ३अ० परस्परनाशोवर्णितः यथा
"ते तु पानमदाविष्टाश्चोदिताः कालधर्म्मणा । युयुधानमथाभ्यघ्नन् छिद्रैर्भोजनैस्तदा । हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः । तदनन्तरमागच्छन्मोक्षयिष्यन् शिनेः सुतम् । स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह । व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ । बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः । हतं दृष्ट्वा तु शैनेयं पुत्रञ्च यदुनन्दनः । एरकाणां तदा मुष्टिं

कोपाज्जग्राह केशवः । तद्भूत्मुषलं घोरं वज्रकल्पम-योमयम् । जघान कृष्णस्तांस्तेन ये ये प्रमुखतोऽभवन् । ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा । जघ्नुरन्योन्यमाक्रन्दे मुषलैः कालचोदिताः । यस्तेषामेरकां कश्चिज्जग्राह कुपितो नृप ! । वज्रभूतेव सा राजन्नदृश्यत तदा विभो । तृणञ्च मुषलीभूतमपि तत्र व्यदृश्यत । ब्रह्मदण्डकृतं सर्व्वमिति तद्विद्धि पार्थिव ! । आविध्याविध्य ते राजन्! प्रक्षिपन्ति स्म यत्तृणम् । तद्वज्रभूतं मुषलं व्यदृश्यत तदा दृढम् । अवधीत् पितरं पुत्रः पिता पुत्रञ्च भारत ! । मत्ताः परिपतन्ति स्म योधयन्तः परस्परम् । पतङ्गा इव चाग्नौ ते निपेतुः कुकुरान्धकाः । नासीत् पलायने बुद्धिर्वध्यमानस्य कस्यचित् । तत्रापश्यन्महाबाहुर्जानन् कालस्य पर्य्ययम् । मुषलं समवष्टभ्य तस्थौ स मधुसूदनः । शाम्बञ्च निहतं दृष्ट्वा चारुदेष्णञ्च माधवम् । प्रद्युम्नञ्चानिरुद्धञ्च ततश्चुक्रोध माधवः । गदं वीक्ष्य शयानञ्च भृशं कोपसमन्वितः । स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः । तं निघ्नन्तं महातेजा बभ्रुः परपुरञ्जयः । दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत् । भगवन्निहताः सर्व्वे त्वया भूयिष्ठशो नराः । रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ।" भावे ल्युट् । २वंशनाशने च ।

**कुलन्धर** पु० कुलं वंशं धारयति धृ-णि० खच् मुम् च । वंशधरे "युधिष्ठिरोलब्धराज्योदृष्ट्वा पौत्रं कुलन्धरम्" भा० १.१२.२४.

**कुलपति** पु० "मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः" पुराणोक्तलक्षणे १मुनिभेदे । "लोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये । शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे" भा०आ०१अ०१श्लो० । "ततोऽब्रवीत् कुलपतिं पादौ संगृह्य भारत !" भा०आनु०६अ०२३०। २वंशश्रेष्ठे च कुलनायकादयोऽप्यत्र । अश्वपत्या० अपत्यादिषु प्राग्दीव्यतीयेषु अर्थेषु अण् । कौलपत तदपत्यादावर्थेषु ।

**कुलपत्र(क)** पु० कुलं भूमिलग्नं पत्रमस्य । दमनकवृक्षे राजनि० । वा कप् । तत्रार्थे । भावप्र० कुलपुत्रक इति क्वचित्पाठे दृश्यो० ।

**कुलपर्व्वत** "पु० माहेन्द्रोमलयः सह्यः शुक्तिमानृक्षपर्व्वतः । विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्व्वताः" विष्णुपु० उक्तेषु जम्बुद्वीपस्थवर्षसीमाकारकेषु माहेन्द्रादिषु सप्तसु वर्षाचलेषु पर्व्वतेषु । एतेषां यथा वर्षमर्य्यादाकारित्वं तथा इलावृतशब्दे ६८४पृ०शि० सि० वाक्येनोक्तम् । प्लक्षादिद्वीपेषु कुलाचलाश्च विष्णुपु० दर्शिता यथा तत्र २प्लक्षद्वीपे "मर्य्यादाकारकास्तेषां तथान्ये वर्षपर्व्वताः । सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम ! । गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा । सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः" शाल्मले । ३"वर्षाचलेषु रम्येषु वर्षेष्वेतेषु चानघ ! । तत्रापि पर्व्वताः सप्त विज्ञेया रत्नयोनयः । रत्नाभिव्यञ्जकास्तेषु तथा सप्तैव निम्नगाः । कुमुदश्चोन्नतश्चैव तृतीयश्च बलाहकः । द्रोणोयत्र महौषध्यः स चतुर्थो महीधरः । कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा । ककुद्मान् पर्व्वतवरः" । ४कुशद्वीपे "विद्रुमाह्वयशैलश्च द्युतिमान् पुष्पवांस्तथा । कुशेशयो हरिश्चैव सप्तमो मन्दराचलः । वर्षाचलास्तु सप्तैव तत्र द्वीपे महामुने" ! ५क्रौञ्चद्वीपे "तत्रापि देवगन्धर्व्वसेविताः सुमनोहराः । वर्षाचला महाबुद्धे ! तेषां नामानि मे शृणु । क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः । चतुर्थो हरशैलश्च स्वभाभिर्भासमप्रभः । देवावृत् पञ्चमश्चैव तथान्यः पुण्डरीकवान् । ६शाकद्वीपे । "तत्रापि पर्व्वताः सप्त वर्षविच्छेदकारकाः । पूर्व्वस्तत्रोदयगिरिर्जलाधारस्तथाऽपरः । तथा रैवतकः श्यामस्तथैवास्तगिरिर्द्विजः ! । आम्बिकेयस्तथा रम्यः केशरी पर्व्वतोत्तमः" । तत्तद्द्वीपस्थेषु उक्तेष्वपि सप्तसु वर्षाचलेषु ७पुष्करद्वीपे तु एकएव मानसोत्तरशैलस्तादृक् यथोक्तं भा० ५.०,२०,२१, तद्द्वीपमध्ये एक एवार्वाचीनपराचीनवर्षयोर्मर्य्यादाकारकोऽयुतयोजनोच्छ्रायायामः" । विष्णुपु० भागवतयोस्तेषां नामभेदः कल्पभेदादविरुद्धः । कुलगिरिकुलाचलवर्षाचलादयोऽप्यत्र । "माहेन्द्रशुक्तिमलयर्क्षकपारियात्राः । सह्यः सविन्ध्य इह सप्त कुलाचलाख्याः" शि०शि० इह जम्बुद्वीपे ।

**कुलपालक** त्रि० कुलं पालयति पालि-ण्वुल् (कमला नेबु) १करुण्वे पु०राजव० २वंशपालके त्रि०स्त्रियां टाप् अतइत्त्वम् । सा च कुलस्त्रियाञ्च [स्त्रियां वा ङीप् ।

**कुलपालि** स्त्री कुलं पालयति पालि-इन् । कुलवत्यां-

**कुलपुत्र** पु० कुलरक्षकः पुत्रः । वंशधरे पुत्रे ततः भावे कर्म्मणि च मनोज्ञा० वुञ् । कौलपुत्रक तद्भावे तत्कर्म्मणि च न०

**कुलप्रसूत** त्रि० कुले सत्कुले प्रसूतः । सत्कुलजाते

**कुलवधू** स्त्री कुले गेहे एव स्थिता वधूः । गृहमात्रस्थितायां योषिति । "भूते भूतां व्रजकुलवधूः कापि साध्वी

समाप्ते" उद्भटः कुलयोषिदादयोऽप्यत्र" अर्थंस्तप्रमी- तानां त्यागिनां कुलयोषिताम्" मनुः

**कुलभृत्या** स्त्री कुलैः वंशभवैः भृत्या भरणम् भृ-भावे क्यप् ६तत०। गर्भिण्या दोहदादिदानरूपायां परिचर्य्यायाम् जटा०। कुलस्य भृत्या। २वंशभरणे च।

**कुलम्पुन** न०कुलं पुनाति पू-बा०खश् मुम् च। भारतोक्ते तीर्थभेदे "कुलम्पुने नरः स्नात्वा पुनाति स्वकुलानि च भा०व० ८३ अ०

**कुलम्भर(ल)** पु० कौ भूमौ रम्भे सन्धिकरणादिव्यापारे लीयते आसक्तः ली-बा० ड लस्य रः अलुक्समा० तु वा रः। चौरे हारा०। [ हेमादौ।

**कुलर** त्रि० कुल+अश्मादि० चतुरर्थ्यां र। कुलसन्निकृष्ट

**कुलवत्** त्रि० कुलं प्रशस्तकुलमस्त्यस्य बला० वा मतुप् मस्य वः। प्रशस्तकुलजे स्त्रियां ङीप्। सा च कुलस्त्रियां स्वगृहमात्रावस्थितायां स्त्रियाम्।

**कुलवर्मा** स्त्री० कुलैः वैद्यकुलैः वर्म्मो गुणोत्कीर्त्तनं यस्याः वर्म्म--भावे घञ् ६त०। रक्तत्रिवृति (लालतेओडि) राजनि०।

**कुलवार** पु० "रविश्चन्द्रो गुरुः सौरिश्चत्वारश्चाकुला इमे। "भौमशुक्रौ कुलाख्यौ तु बुधवारः कुलाकुलः" त- न्त्रसा० उक्तयोः कुजशुक्रवारयोः।

**कुलविद्या** स्त्री कुलक्रमागता विद्या। १वंशक्रमागतविद्या- याम्। कुलैः स्वकुलैः शिक्षणीया विद्या। "२आन्वीक्षि- कीत्रयीप्रभृतिविद्यायाम् "तमादौ कुलविद्यानामर्थमर्थ- विदां वरः" रघुः [ चौरस्वामी कुलपुरोहितादयोऽप्यत्र

**कुलविप्र** पु० कुलक्रमागतः विप्रः। वंशक्रमागते पुरोहिते

**कुलव्रत** न० कुले चर्य्यं व्रतम्। कुलक्रमेण कर्त्तव्ये व्रते "गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्" रघुः।

**कुलश्रेष्ठिन्** त्रि० कुलेषु श्रेष्ठी। शिल्पकुलप्रधाने अमरः

**कुलसंख्या** स्त्री कुले संख्या कीर्त्तिः। वंशमध्ये गणना- याम् वंशश्रेष्ठतायाम् "मन्त्रतस्तु समृद्धानि कुलान्यल्प- धनानि च। कुलसंख्याञ्च गच्छन्ति कर्षन्ति च महद्- यशः" मनुः

**कुलसत्र** न० कुलैः कुलजैरनुष्ठेयं सत्रम्। पित्रादिक्रमेण तुल्ये सहस्रवर्षसाध्ये कार्ष्णाजिनिमताश्रिते सत्रभेदे तच्च कात्या०श्रौ० १,६,२२, दर्शितं यथा "कुलसत्रमिति कार्ष्णाजिनिः"सू०। "कार्ष्णाजिनि र्मुनि- रित्याह एवं कथयति यत् कुलसत्रमेतत् सहस्रसंवत्- सरं भवति कुलस्य पितृपुत्रपौत्रप्रपौत्रतत्पुत्रादिरूपस्य वंशस्यैतत्भवति न त्वेकस्य कस्यचित् असम्भवात्। मनु- ष्याधिकारं चैतत् प्रारब्धं चावश्यं समापनीयं नचैकः शक्नोति समापयितुमिति यथा शक्यते तथा समापनीय- मिति गम्यमाने ये बहवस्ते शक्नुवन्ति तेन तत्कुलीनाः क्रमेण कैश्चिदारब्धं कैश्चिन्मध्येऽनुष्ठितं कैश्चित् समा- पयिष्यन्तीत्येवं कुलसत्रं कार्ष्णाजिनिमन्यते" कर्कः अ- थास्य दिनपरत्व कल्पनेन कात्यायनेनेदं दूषितम्।

**कुलसम्भव:** कुलं सम्भवोऽस्य। बीज्ये कुलजाते अमरः।

**कुलसाधक** त्रि० कुलेन कुलाचारेण साधकः। तन्त्रोक्ते कुलाचारेण साधकभेदेषु तेच तन्त्रसारे दर्शिताः यथा "उपासकान्महादेव! शृणु चैकमनाः स्वयम्। मनुश्चन्द्रः कुबेरश्च मन्मथसदनन्तरम्। लोपामुद्रामुनिर्नन्दी शक्रः स्कन्दः शिवस्तथा। क्रोधभट्टो रुद्रश्चैव पद्मनश्च प्रकी- र्त्तितः। दुर्व्वासा व्यासरुद्रौ च वशिष्ठश्च पराशरः। और्व्वोवह्निर्यमश्चैव निर्ऋतीवरुणस्तथा। वायुर्विष्णुः स्वयम्भूश्च भैरवो दानवस्तथा। अनिरुद्धो भरद्वाजो दक्षिणामूर्त्तिरेव च। गणपाः कुलपाश्चैव लक्ष्मीर्गङ्गा सरस्वती। रात्रीदेवः प्रमत्तश्च उन्मत्तः कुलभैरवः। क्षेत्रपालो हनूमांश्च दक्षो गरुड़ एव च। काश्यपः कौशकुत्सौ च जमदग्निर्भृगुस्तथा। बृहस्पतिर्यदु- श्रेष्ठो दत्तात्रेयो युधिष्ठिरः। अर्जुनो भीमसेनश्च द्रो- णाचार्य्यो कृपाकपिः। दुर्य्योधनस्तथा कुन्ती सीता च रुक्मिणी तथा। सत्यभामा द्रौपदी च उर्वशी च तिलो- त्तमा। पुष्पदन्तो महाबाहुर्वाणः कालश्च मन्दरः। कैलासः क्षीरसिन्धुश्च उदधिर्हिमवांस्तथा। नारदश्च महावीराः कामतो वीरसाधकाः। महाविद्याप्रसादेन स्वस्वकर्म्मसमन्विताः। एतेषां वत्स! नामानि विद्या विद्योपसेविनाम्। प्रातःकाले शुचिर्भूत्वा यः पठेत् प्रय- तात्मवान्। पूजायां वा शुचिर्भूत्वा प्रसीदामि कुलान्वये। अशुचिर्वानिरालम्बप्रकालम्बप्र च कुलान्तिके। नित्य पूजाफलं तस्य ददामि यदभीप्सितम्।"

कुलवीरकुलोपासकादयोऽप्यत्र

**कुलसौरभ** न०कुलं श्रेष्ठं सौरभमस्य। मरुवकवृक्षे शब्दमा०

**कुलस्त्री** स्त्री कुले गृहे स्थिता स्त्री। कुलपालिकायाम् अमरः

**कुलहुण्डक** पु० कुलाय संघाय हुण्डते हुडि--संघे ण्वुल्। आवर्त्ते हारा० कुलहुण्डकोऽप्यत्र त्रि० पृषो०।

**कुलाकुल** त्रि० तन्त्रोक्तेषु तत्संज्ञकतिथिवारनक्षत्रेषु। कुलाचारग्रन्थे विवृतिः

**कुलाकुलचक्र** न० कुलञ्च अकुलं कुलाकुलम् तयोर्विचारार्थं चक्रम्। तन्त्रोक्ते साधकस्य शुभाशुभज्ञानार्थे चक्रभेदे तद्विवृतिः तन्त्रसारे
"कुलाकुलस्य भेदं हि कथयामि मन्त्रिणामिह"। इत्युक्त्वा निबन्धे "वाय्वग्निभूजलाकाशपञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः (यादयः)। कादयः पञ्चशः षष्ठलक्षक्षान्ताः समीरिताः"। अ आ ए क च ट त प य षा मारुताः। इ ई ऐ ख छ ठ थ फ र क्षा आग्नेयाः। उ ऊ ओ ग ज ड द ब ल ळाः पार्थिवाः। ऋ ॠ औ घ झ ढ ध भ व सा वारुणाः। ऌ ॡ अं ङ ञ ण न म श हा नाभसाः। "साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम्। यद्येकभूतदैवत्यं जानीयात् सकुलं हि तत्। भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम्। मारुतं पार्थिवानाञ्च शत्रुराग्नेयवारुणम्"। चकाराद्वाग्नेयं पार्थिवानां शत्रुः। तथाच रुद्रयामले "पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितः। ऐन्द्रवारुणयोः शत्रुर्मारुतं स प्रकीर्त्तितः। नाभसं सर्वमित्रं स्यात् विरुद्धं नैव शीलयेत्। मित्रं सिद्धिः समाख्याता उदासीने न किञ्चन। शत्रुर्व्याधिरमित्रे च स्वकुले सिद्धिरुत्तमा"।

**कुलाङ्गार** न० कुलस्याङ्गारमिव उपमितस०। कुलाधमे वंशदूषके "भङ्क्ष्यति च कुलाङ्गारं चोदितो मे ततकुकम्" भाग० १।१४।२७।

**कुलाचार** पु० ६त०। कुलोचिते धर्मे "जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च। क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते। ब्रह्मबुद्ध्या निर्विकल्पमेतेष्वाचरणञ्च यत्। कुलाचारः स एवोक्तो धर्मकामार्थमोक्षदः" इत्युक्तलक्षणे सर्वत्र ब्रह्मदृष्टिसाधके श्यामभेदे तन्त्रोक्ते श्याचारभेदे च तन्त्रसारे तदाचारप्रकारो दर्शितो यथा "कालीतन्त्रे "अथाचारं प्रवक्ष्यामि यत्कृतेऽमृतमश्नुते। सर्वभूतहिते युक्तः समयाचारपालकः। अनित्यकर्मसंत्यागी नित्यानुष्ठानतत्परः। मन्त्राराधनकालेषु शिवभावेन तत्परः। परस्मै देवतायान्तु सर्वकर्मनिवेदकः। अन्यमन्त्रार्चनरता अन्यमन्त्रप्रपूजनम्। कुलस्त्रीवीरनिन्दाञ्च तद्द्रव्यस्यापहारणम्। स्त्रीषु रोषं प्रहारञ्च वर्जयेन्मतिमान् सदा। स्त्रीमयञ्च जगत् सर्वं स्वयञ्चापि तथा भवेत्। पेयद्रव्यं तथा चोष्यं भक्ष्यं लेह्यं स्वरूपं सुखम्। सर्वञ्च युवतीरूपं भावयेन्मतिमान् सदा। कुलजां युवतीं वीक्ष्य नमस्कुर्य्यात् समाहितः। यदि भाग्यवशाद्देवि! कुलदृष्टिः प्रजायते। तदैव मानसीं पूजां तत्र तासां प्रकल्पयेत्"। तासां भगादिदेवीनाम्। तास्तु "भगिनीं भगमालाञ्च भगाख्यां भगमालिनीम्। भगदत्तां भगाङ्गाञ्च भगरूपां भगसत्त्वाम्। भगनाथां भगस्तनीं भगस्थां भगसर्पिणीम्। संपूज्य ताभ्योगन्धाद्यैर्मानसैर्वमेव च। नमस्कृत्य पुमानेवं समश्नोति ततः सुधीः। बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीं तथा। कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत्। तासां प्रहारं निन्दाञ्च कौटिल्यमप्रियन्तथा। सर्वथा न च कुर्व्वीत चान्यथा सिद्धिरोधकृत्। स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव विभूषणम्। स्त्रीसङ्गिना सदा भाव्यमन्यथा स्वस्त्रियापि। विपरीतरता सा तु भविता हृदयोपरि। तत्सारचितं पुष्पं तत्क्षारचितं जलम्। तत्क्षारचितं द्रव्यं देवताभ्यो निवेदयेत्। स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं महत्। जपस्थाने महाशङ्खं निवेश्योर्द्धं जपञ्चरेत्। स्त्रियं गच्छन् स्पृशन् पश्यन् विशेषात् कुलजां शुभाम्। भक्ष्यं ताम्बूलमन्यच्च भक्ष्यद्रव्यं यथारुचि। भक्त्वाप्यशेषभक्ष्याणि भुक्त्वा शेषं जपञ्चरेत्"। कालीतन्त्रे "दिक्कालनियमोनात्र स्थित्यादिनियमो न च। जपे न कालनियमो नार्चादिषु बलिष्वपि। स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने। वस्त्रासनस्थानदेहागारपुष्पादिधारिणः। शुद्धिं नाचरेत्तत्र निर्विकल्पं मनश्चरेत्"। कुलार्णवे "कुलाचारमदृष्ट्वा भक्त्या पापविशुद्धये। याचयेदमृतं कौलं तदभावे जलं पिबेत्। कुलाचारेण यद्दत्तं क्षत्वा पात्रेण भक्षितः। नमस्कृत्य च टङ्कोपाटनन्यथा नरकं व्रजेत्"। अन्यत्रापि "न वृथा गमयेत् कालं द्यूतक्रीडादिना सुधीः। गमयेद्देवतापूजाजपयामस्तवादिना। वीराणां जपयज्ञस्तु सर्वकाले प्रशस्यते। सर्वदेशे सर्वपीठे कर्त्तव्यो नात्र संशयः"। शिवागमे "शक्तिः शिवः शिवः शक्तिः शक्तिर्ब्रह्मा जनार्द्दनः। शक्तिरिन्द्रो रविः शक्तिः शक्तिश्चन्द्रो ग्रहा ध्रुवम्। शक्तिरूपं जगत् सर्वं यो न जानाति नारकी"। वीरतन्त्रे "स्नानादि मानसं शौचं मानसं प्रवरो जपः। मानसं पूजनं दिव्यं मानसं तर्पणादिकम्। सर्व एव शुभः कालो नाशुभो विद्यते क्वचित्। न विशेषो दिवा रात्रौ न सन्ध्यायां महानिशि। सर्वदा पूज-

देहे चोपस्थात: कृतभोजनः । महानिशायां देवि यजेन् मन्त्री दापयेत्" । यत्तु "रात्रावेव महापूजा कर्त्तव्या-वीरसिद्धये । न दिवा सर्वथा कार्य्या सावधानम् सुव्रते" । तत् पुनः कुलदेवताविषये । महानिशा तु तत्रैव "अर्द्धरात्रात् परं यच्च मुहूर्त्तद्वयमेव च । सा महारात्रि-रुद्दिष्टा तद्दत्तमक्षयम् वै" मन्त्रार्थे, "पुष्पोद्गमतीं वीक्ष्य सहस्रं यदि नित्यशः । तदा वाग्मी भवेल्लोके कवितत्र: क्षितितलं विशेत्" । "पञ्चमे कुसुमारोप्य निर्भयोयत-मानसः । कवितां लभते सोऽपि सुस्वरत्वञ्च गच्छति" । अत्रापि सहस्रमिति सम्बन्धः । पुष्पीं स्त्रियं, नित्यश इति योकुमदिनं यावत् । पर्वतं स्तनम् । अन्यच्च नीलतन्त्रे "पद्मं हृद्य तथा विम्बं खञ्जनं शिखरं तथा । चामरं रविविम्बञ्च तिलपुष्पं सरोरुहम् । त्रिशूलं वीक्ष्य जप्त्वा च मानवः शुद्धभावनः । सुकुशं प्रसादं सुखं सुखोचनं सुखात्मकम् । सुवेशं सुगतिं गन्धं सुगन्धं सुरमेव च । लभते च यथासंख्यं शृणु पार्वति ! सादरम्" । पद्मं मुखं,विम्बमधरं, खञ्जनचक्षुः,शिखरं स्तनं,चामरं केशं,रविबिम्बं सिन्दूरं,तिलपुष्पं नासिकां,सरोरुहं नाभिं, त्रिशूलं त्रिवलीम्,साहचर्य्यात् । भावचूड़ामणौ "एकाकी निर्जने देशे श्मशाने विजने वने । शून्यागारे नदीतीरे निःशङ्कोविचरेत् सदा । महाचीनक्रमे देवीं ध्यात्वा तत्र प्रपूजयेत् । तद्द्रव्योद्भवपुष्पेण पूजयेद्भक्तिभावतः । सुभनेत् कुलदेवस्य कुलद्रु मगतः शुचिः । श्मशाने रोर्म्यक्रा-पीठे देवीं ध्यात्वा यथाविधि । ततस्तु धारसधारेण तर्प-येच्चा रक्तानमम् । महाचीनद्रु मसतायेष्टितः साधको-त्तमः । रात्रौ यदि जपेन्मन्त्रं सर्वे कल्पद्रु मोभवेत् । ति-थिक्रमेण संख्याभिर्लताभिर्वेष्टितो यदि । तदा मासेन सिद्धिः स्यात् सहस्रजपमानतः । अष्टम्याञ्च चतुर्द्दश्यां द्विगुणं यदि लभ्यते । तत्रैव महती सिद्धिर्द्देवतानां सुदुर्लभा" । कुलचूड़ामणौ "शृणु पुत्र ! रहस्यं मे सम-याचारलक्षणम् । येन हीना न सिध्यन्ति कल्पकोटि-सहस्रतः । मानवः कुलशास्त्रार्थं कुलधर्म्मानुचारिणाम् । स्वदारनिरतः सर्वत्र वैष्णवाचारतत्परः । परनिन्दापरक्षिप्या-सादुपकाररतः सदा । पर्वते विपिने वापि निर्जने च शू-न्यमण्डपे । चतुष्पथे कन्या(स्त्री)मध्ये यदि दैवाद्गतिर्भ-वेत् । क्षणं स्थित्वा मनुं जप्त्वा गत्वा गच्छेद्यथासुखम् । श्मशं वीक्ष्य महाकालीं नमस्कुर्य्यादनन्तरम् । नमस्कुर्य्यात् तथा वीक्ष्य जम्बुकीं वमद्भूतिकाम् । कृष्णरक्तेनभूकाकौ

कृष्णमार्जारमेव च" । इन्द्रा नमस्कुर्य्यादिति शेषः । मन्त्रस्तु "लम्बोदरि ! महाचण्डे ! तीक्ष्णदंष्ट्रे ! वलिप्रिये ! । कुलाचारप्रसन्नास्ये ! नमस्ते शङ्करप्रिये ! । शृगालम् तं दृष्ट्वा प्रदक्षिणमनुव्रजन् । प्रणम्यानेन मनुना मन्त्रो सुखमवाप्नुयात् । घोरदंष्ट्रे ! करालास्ये ! किटिशब्दवि-नादिनि ! । घोरघोररवास्फाले ! नमस्ते ! चितिवासिनि ! । रक्तवस्त्रं तथा पुष्पं विलोक्य त्रिपुरां तथा । प्रणमेद् दण्डवद्भूमौ इमं मन्त्रं पठेन्नरः । बन्धूक-कुसुमप्रख्ये त्रिपुरे ! भयनाशिनि ! । भाग्योदयसमुत्-पन्ने ! नमस्ते वरवर्णिनि ! । कृष्णवस्त्रं तथा पुष्पं राजानं राजपूरुषम् । कृष्णम्बरधरश्चापि फलकान् वी-रपूरुषान् । महिषं कुलदेवञ्च दृष्टा महिषमर्द्दिनीम् । प्रणम्य जयदुर्गां वा स च विघ्नैर्न लिप्यते । जय ! देवि ! जगद्धात्रि ! त्रिपुराद्ये ! त्रिदैवते ! भक्तेभ्योवरदे ! देवि ! महिषघ्नि ! नमोऽस्तु ते । सद्यभाण्डं समालोक्य मत्स्यं मांसं वरस्त्रियम् । दृष्टा च भैरवीं देवीं प्रणम्य विलपेन्मनुम् । घोरविघ्नविनाशाय कुलाचारसमृद्धये ! । नमामि ! वरदे ! देवि ! मुण्डमालाव्यां विभूषिते ! । रक्तधारासमाकीर्णवदने ! त्वां नमाम्यहम् । सर्वविघ्नहरे ! देवि ! नमस्ते हरवल्लभे ! । एतेषां दर्शने चैव यदि नैवं प्रकुर्वते । शक्तिमन्त्रं पुरस्कृत्य तस्य सिद्धिर्न जायते" तथा कालचूड़ामणौ "कुलवारे कुला-ष्टम्यां चतुर्दश्यां विशेषतः । योगिनीपूजनं तत्र प्रधानं कुलपूजनम् । यथा विष्णुतिथौ विष्णुः पूजितो वा-ञ्छितप्रदः । तथा कुलतिथौ दुर्गा पूजिता वरदायिनी । कुलवारादिनियमोयामले "यरिवन्द्रौ गुरुः सौरिश्च-त्वारश्चाकुलाह्वये । भौमशुक्रौ कुलाख्यौ हि बुधवारः कुलाकुलः । द्वितीया द्वादशी षष्ठी कलाकलमुदाहृतम् । विषमा चाकुलाः सर्व्वाः शेषाश्च तिथयः कुलाः" विषमाः प्रतिपत् तृतीया पञ्चमी सप्तमी नवमी एका-दशी त्रयोदशी पञ्चदशी चाकुलाख्या तद्भिन्नाः सर्व्वाः शेषाश्च तिथयः कुलाः । "वारुणार्द्राभिजिन्मूलं कुला-कुलमुदाहृतम् । कुलानि समधिष्ण्यानि शेषाणि च कुलानि च । तत्फलमाह तत्रैव "तिथिवारे च नक्षत्रे चाकुले स्थायिनो भयम् । कुलाख्ये जयिनो नित्यं साम्यश्चैव कुलाकुले" । एवं कुलवारादिकं ज्ञात्वा साधकः कर्म्मकुर्य्यात्" । विद्वत्तिश्च आगमे द्रष्टव्या ।

कुलाचार्य्य पु० कुलक्रमागतः आचार्य्यः । (कुलगुरौ कन्या

वंशस्य व्याख्यायामाचार्य्यः। आधुनिककुलव्यापके विप्रभेदे। (घटक) [भेदे शब्दमा० स्त्रियां जातित्वात् ङीष्

**कुलाट** पुंस्त्री कुलेन संघेनाटति अट–अच् ३त०। क्षुद्रमत्स्ये

**कुलाय** पु० कुलं पक्षिसंघातोऽयतेऽत्र अय–घञ्। १पक्षिनिलये नीडे, अमरः; "खगकुलाय कुलायनिलायिताम्" माघः वेदे त्वस्य क्लीवत्वमपि कुलायिनीशब्दे ता–ब्रा० वाक्ये उदा० दृश्यम्। २स्थानमात्रे मेदि० कौ वायोर्गतिरक्षात्। ३ देहे म०।

**कुलायस्थ** पुंस्त्री कुलाये नीड़े तिष्ठति स्था–क ७त०। नीड़स्थे पक्षिमात्रे शब्दच०स्त्रियां जातित्वेऽपि संयोगोपधत्वात् टाप्। कुलायवासीत्यादयोऽप्यत्र स्त्रियां ङीप्

**कुलायिका** स्त्री कुलायः पक्षिवासस्थानं विद्यतेऽस्याम् ठन्। पक्षिशालायां (चिड़ियाखाना)। त्रिका०।

**कुलायिनी** स्त्री व्युत्पत्तिः ता०भाष्योक्ता। त्रिवृत्स्तोमस्य विष्टुतिभेदे तत्प्रकारादिकं ताण्ड्य०ब्रा०३अ० दर्शितं यथा।
"अथ कुलायिनीं विष्टुतिन्दर्शयति" माधवभाष्यम्
"तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति या मध्यमा सा प्रथमा, योत्तमा सा मध्यमा, या प्रथमा सोत्तमा, तिसृभ्यो हिङ्करोति योत्तमा सा प्रथमा, या प्रथमा सा मध्यमा, या मध्यमा सोत्तमा, कुलायिनी त्रिवृतो विष्टुतिः" ब्रा०
"परिवर्त्तिन्याद्युच प्रथमः पर्य्यायः पराचीभिः। द्वितीये पर्य्याये तृचस्य या मध्यमा ऋक् सा प्रथमा कार्य्या। योत्तमा सा मध्यमा कार्य्या। या प्रथमा सोत्तमा कार्य्या। तृतीयः पर्य्यायः निगदसिद्धः। कुलायिनी कुलायो नीडं पक्षिणां निवासस्थानं तद्वद्या व्यस्ततृचादिर्निर्म्मितम् एवं व्यत्यासयुक्ता ऋचः कुलायास्तैस्तद्वती कुलायिनी एतन्नाम्नी त्रिवृत्स्तोमस्य विष्टुतिरियम्"
"अस्यां विष्टुतौ कोऽधिकारीत्यत आह" भा०
"प्रजाकामो वा पशुकामो वा स्तुवीत प्रजा वै कुलायम्पशवः कुलायङ्कुलायमेव भवति" ब्रा०
"प्रजानाम्पशूनाञ्च कुलायवदवस्थितिहेतुत्वात् कुलायत्वेन स्तुतिः। कुलायिन्या स्तुवानोऽपि प्रजानां पशूनाञ्च कुलायमेव आश्रयभूतो भवत्येव"।
"पुनरप्यधिकारिविशेषं दर्शयति" भा०
"एतामेवानुजावराय कुर्य्यादेव तासामेवाग्रं परियतीनां प्रजानामग्रम्पर्य्येति" ब्रा०
"अनु पश्चाज्जायत इत्यनुजः कनीयान् सन् निकृष्टः तस्मादप्यवरो निकृष्टः अनुजावरस्तादृशाय यजमानायैव ति। अग्रं परियतीनां लोके याः प्रजाः अग्रं श्रेष्ठपदं परियन्ति परितो गच्छन्ति एतासामेव श्रैष्ठ्यं परिगच्छन्तीनां प्रजानामध्ये स यजमानः अग्रं श्रेष्ठं पदं पर्य्येति परिगच्छति सर्वोत्कृष्टो भवतीत्यर्थः"
"सत्त्वहीनेषु च बहूनां यजमानानां फलसाम्यात् कुलायिनीं विधत्ते" भा०
"एतामेव बहुभ्यो यजमानेभ्यः कुर्य्यात् यत्सर्वा अग्रिया भवन्ति सर्वा मध्या सर्वा उत्तमाः। सर्वानेवैनान् समावद्भाजः करोति नान्योन्यस्मपत्नते सर्वे समावदिन्द्रिया भवन्ति" ब्रा०
"एतामेव कुलायिनीन्त्रिवृतो विष्टुतिं बहुभ्यो यजमानेभ्य: उद्गाता कुर्य्यात् यत् यस्माद्धेतोः तृचगताः सर्वा ऋचः अग्रिया मुख्याः प्रथमा भवन्ति सर्वास्तु मध्ये वर्त्तमाना भवन्ति सर्वास्तोत्तमा भवन्ति तद्यथा प्रथमे पर्य्याये प्रथमैव प्रथमा भवति। मध्यमे तु मध्यमा प्रथमा भवति। उत्तरे उत्तमा प्रथमा भवति। एवं सर्वासां प्राथम्यं जातम्। तथा प्रथमपर्य्याये मध्यमैव मध्यमा द्वितीये पर्य्याये उत्तमैव मध्यमा तृतीये पर्य्याये प्रथमैव मध्यमा। एवं सति तिस्रोऽपि मध्यमाः सम्पन्नाः। तथा प्रथमे पर्य्याये उत्तमोत्तमा भवति। द्वितीये पर्य्याये प्रथमैवोत्तमा भवति। तृतीये पर्य्याये मध्यमैवोत्तमा भवति। एवं सर्वा अप्युत्तमाः सम्पन्नाः। यस्मादेताः सर्वा ऋचः समानरूपाः ततो हेतोरनया विष्टुत्या सर्वानेवैनान् यजमानानुद्गाता समावद्भाजः समावच्छब्दः समपर्य्यायः समं फलं भजन्त इति समावद्भाजः साम्येन फलभाजः करोति। अतएव नान्योन्यमपन्नते परस्परञ्च हिंसन्ति। तथा सर्वे यजमानाः समावदिन्द्रियाः समावद्वीर्य्याः समानसामर्थ्या भवन्ति"।
"फलान्तरमाह" भा०
"शुष्कः पर्ज्जन्यो भवतीमे हि लोकाः पञ्चात् हिङ्कारेण व्यतिषजति" ब्रा०
"लोकत्रयात्मिकानां त्रिवृत्साम्नामादौ प्रयुक्तेनैकेनैव हिङ्कारेण व्यतिषञ्जनात् संयोजनात् त्रयाणां लोकानां परस्परमुपकार्य्योपकारकभावो न बाध्यत इति पर्ज्जन्यो वर्षशीलो भवतीत्यर्थः"।

"अस्यामपि विष्टुतौ बहुदोषाः सम्भवन्तीत्याह" भा० "पापवसीयसन्तु भवति" ब्रा०

"तुशब्दः फलवैलक्षण्यद्योतनार्थः। पापं प्रसिद्धं वसीयः पुण्यं तदुभयमेकाश्रयं भवति। इतरत् उद्यतीवाक्यशेषवत् व्याख्येयम्। नञः भावोऽत्र विशेषः। इत्थं विष्टुतयस्तिस्रो विहिताः, तिसृष्वपि तासु फलविशेषश्रवणाभिन्द्रादर्शनाच्च समानफलत्वात्पर्यायनित्याः, यत्र विशेषादेशः क्रियते निमित्तं वा कामो वा श्रूयते ततोऽन्यः नित्यः। प्रयोगे आद्याभिरेताभिरेव स्तुतिभिः स्तोमसम्पादनं कार्य्यं, तदाह सूत्रकृत्। "प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेशे ताः पर्य्याः सर्वाभिप्रायाश्चेति"। पुनरपि यथाविधं वा विदध्यादित्यादिना सम्भेदेन बहवः पक्षाः सूत्रकृतोपन्यस्ताः ते तत्रैव बोद्धव्याः। नन्वेतास्वपि प्रत्येकं निन्दादर्शनात् कथमासां नित्यत्वम्। नैष दोषः, उद्यत्यान्नावत् यो दोष उक्तः अवर्षुकः पर्ज्जन्यो भवतीति, स कुलायिनीपरिग्रहे परिह्रियते। यत्र हि वर्षुकः पर्ज्जन्यो भवतीत्याम्नातम्। यत्तु कुलायिन्यां दोषदर्शनं पापवसीयसन्तु भवत्यधरोत्तरमित्यादि तदुद्यतीप्रयोगेण विहृतं तत्र हि पापवसीयसो विष्टुतिरिति या श्रूयते तत्रैव तु पापवसीयसन्तु भवति"।

"अधरोत्तरमपावगतो रुध्यतेवगच्छत्यपरः पापीयाञ्छ्रेयांसमभ्यारोहति जनता जनतामभ्येत्यन्योन्यस्य प्रजा आददते न यथा क्षेत्रं कल्पन्ते" ब्रा०

"प्रथमाया मध्यमायाश्चान्ते प्रयोग इति यदस्ति तदेतदधरोत्तरमनुष्ठानं यस्मिन् देशे क्रियते तत्र वा ईश्वरा पर्ज्जन्योऽनुज इति परिवर्त्तिन्यां यदपशुलक्षणं दोषदर्शनं तदुद्यत्यां परिहृतं भवति। एषा वै प्रतिष्ठिता विष्टुतिरिति, तत्र हि वाक्यशेषः प्रजापशुमश्नुते हि प्रतिष्ठितो भवतीति"।

एतत्सामयोनिः सूक्तविशेषः। तत्पाठप्रकारः साम संहिताभाष्ये उक्तो यथा "सामगानामुत्तराग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि यथा "उपास्मै गायता नर" इत्याद्यं सूक्तं "दविद्युतत्या रुचा" इति द्वितीयं "पवमानस्य ते कव" इति तृतीयम्" तच्च उद्यतीशब्दे ११८२पृ० दर्शितम्। एवमुद्यती विष्टुतिमुक्त्वा "एवं परिवर्त्तिनी कुलायिनीति द्वे विष्टुती भवतः "इति इत्युक्त्वा परिवर्त्तिन्या विष्टुतेः प्रकारमुक्त्वा कुलायिन्याः प्रकारकथनाय प्रागुक्तं भा० ब्रा० वाक्यमुदाहृत्य व्याख्यातम्। अत्र प्रथमसूक्ते "पराचीभिः अनुक्रमेणाम्नाताभिः। तेन पाठक्रमएव। द्वितीये पर्य्याये मध्यमोत्तमप्रथमाः। तृतीयेतूत्तमाद्यमामध्यमा इत्येवं क्रमासेन" मन्त्राः (पूर्वोक्ताः) बोध्याः

२कुलाययुक्ते त्रि० "जज्ञानन्तं प्रथमः सीद योनिम्। कुलायिनं घृतवन्तम् सवित्रे" ऋ० ६।१५।१६। "कुलायिनं गुग्गुल्वादिसंभरणोपेतम् तथा च श्रूयते "कुलायमिव ह्येतद्यज्ञे क्रियते यत् पैतदारवाः परिधयो गुग्गुलूर्णास्तुकासुगन्धितेजनानि" ऐत०ब्रा०" भा०।

**कुलाल** पुंस्त्री कुल—कालन्, कुलमलति अल—अण्,कुलमालाति आ+ला—क—वा। १कुम्भकारे, (कुमार) अमरः "कुलालजनकोऽपरः भाषा० "नमः कुलालेभ्यः कर्म्मारेभ्यश्च" यजु० १६।२७। २कुक्कुभपक्षिणि मेदि० जातित्वात् स्त्रियां ङीप्। ततः तेन कृतमित्यर्थे संज्ञायां कुलाला० वुञ्। कौलालक तत्कृते घरावादौ त्रि०

**कुलालादि** पु० संज्ञायां तेन कृतमित्यर्थे वुञ्प्रत्ययनिमित्ते पाणिन्युक्ते शब्दगणभेदे स च गणः "कुलाल वरुड चण्डाल निषाद कर्म्मार सेना सिरिन्ध्र सैरन्ध्र देवराज परिषत् वधू मधु रुरु रुद्र अनडुह् ब्रह्मन् कुम्भकार श्वपाक" कौलालकं वारुडकम् इत्यादि

**कुलाली** स्त्री कुलमलति अल—अण् ङीप्। १नीलाञ्जनभेदे, कपित्थाञ्जनप्रस्तरभेदे, अमरः २आरण्यकुलत्थिकायाम्, राजनि० ३कुम्भकारभार्य्यायाञ्च। स्वार्थे क ह्रस्वः। कुलालिकाप्यत्र हेमच०

**कुलाह** पुंस्त्री० कुलमाहन्ति आ+हन—ड। ईषत्पीतवर्णे कृष्णजानौ अश्वे हेमच० ततः संज्ञायां कन्। २लककारे, (राङ्गाकुलेखाड़ा) इति ख्याते शाकभेदे शब्दमाला। "आमवातरक्तवातरोगनाशी कुलाहकः" राजवल्लभः [ वृक्षभेदे रत्नमाला

**कुलाहल** पु० कुलमाहलति स्पर्द्धते अच्। (कुकुरशोङ्गा)

**कुलि** पु० कुल—इन् कित्। १हस्ते त्रिका०। २कण्टकारिकायां स्त्री शब्दरत्ना० कृदिकारान्तत्वात् वा ङीप्।

**कुलिक** त्रि०कुलमर्हत्वेन प्रायण्येन यास्यत्र ठन्। १कुलश्रेष्ठे मेदि०२शिल्पिकुल,प्रधाने अमरः। (कुलेखाड़ा)इति प्रसिद्धे ३शाकभेदे पु० मेदि० महानागान्तर्गते ४नागभेदे पु०"शेषः पद्मो महापद्मः कुलिकः शङ्खपालकः। वासुकिस्तक्षकश्चैव कालियोमणिभद्रकः। ऐरावतो धृतराष्ट्र।

"अभेदनाय कुलिशक्षतानाम्" कुमा० २मत्स्यभेदे पु० त्रिका०। ३अस्थिसंहारवृक्षे रत्नमा०।

**कुलिशद्रुम** पु० कुलिश इव द्रुमः। स्नुहीवृक्षे शब्दचि०

**कुलिशधर** पु० कुलिशं धरति धृ—अच्। वज्रधरे इन्द्रे कुलिशभृदादयोऽप्यत्र पु०

**कुलिशनायक** पु० "स्त्रीपादद्वयमाकृष्य विस्तुक्तिमनिवृत्तकः। योनिञ्च पीडयेत् कामी बन्धः कुलिशनायकः" रतिमञ्जर्युक्ते शृङ्गारबन्धभेदे। कुलिशनामक इति पाठः साधुः

**कुलिशपाणि** पु० कुलिशः पाणावस्य। इन्द्रे देवराजे

**कुलिशाङ्कुशा** स्त्री बौद्धानां विद्यादेवीभेदे हेमच०

**कुलिशासन** पु० कुलिशमिव दृढमासनमस्य। शाक्यमुनौ त्रिका०

**कुली** स्त्री कुल—क गौरा० ङीष्। १कण्टकारिकायाम् अमरः २वृहत्यां राजनि०। ३पत्नीज्येष्ठभगिन्याम् (बड़शाली) हेमच०

**कुलीक** पुंस्त्री० कुल—बा० ईकन् किच्च। पक्षिमात्रे स्त्रियां जातित्वेऽपि टाप्। "सोमाय लवानालभते त्वष्ट्रे कौलीकान् गोषादीर्देवानां पत्नीभ्यः कुलीका देवजामिभ्यः" यजु०२४।२४ कुलीक+स्वार्थेऽण् "कौलीकान् पक्षिणः" तिस्रः कुलीकाः पक्षिणोर्देवजामिभ्य देवभगिनीभ्यः" वेद दी०।

**कुलीन** पुंस्त्री० कुले जातः ख। १सत्कुलजे हये स्त्रियां ङीष्। तन्त्रोक्ते २कुलाचारयुक्ते ३उत्तमकुलजाते त्रि०। कौ पृथिव्यां लीनः। ४भूमिलग्ने त्रि०। संज्ञायां कन्। कुलीनक वनमुद्गे पु० हेमच० [क। जले हेम०।

**कुलीनस** न० कुलिलीनं भूलग्नं स्यति सो—अन्तकर्मणि

**कुलीपय** त्रि० जलचरजन्तुभेदे "मित्राय कुलीपयान्, वरुणाय नक्रान्" यजु० २४,२१। "कुलीपयान् जलजान् मित्राय" वेददी०। नाक्रोमकरः कुलीपयस्तेऽकूपारस्य" यजु० २४।३५ "नाक्रः मकरः कुलीपयस्ते त्रयः जलचरविशेषाः" वेददी०

**कुलीर** पुंस्त्री० कुल—संस्त्याने ईरन् किच्च। १कर्कटे (केंकड़ा) जलचरजन्तुभेदे अमरः स्त्रियां ङीष्। २कर्कटराशौ च। कर्कटशब्दे विवृतिः।

**कुलीरशृङ्गी** स्त्री कुलीरः कुलीरावयव इव शृङ्गमस्याः गौरा० ङीष्। (काँकड़ा शिङ्गा) इति रत्नमा० कुलीरविषाणीत्यप्यत्र स्त्री

**कुलीराद्** पु० कुलीरमत्ति अद्—क्विप्। कर्कटविषाणी तत्रोत्पन्नत्वेव सावयवतिग्मविभागमेन तत्तुल्यत्वात्तथात्वम्

**कुलीश** पुंन० कुलिश+पृषो०। वज्रे शब्दरत्नावली

**कुलुक** न० कुल—बा० उलच् किच्च। जिह्वामले हेमच०

**कुलुकगुञ्जा** स्त्री कौ भूमौ लुका गुप्ता गुञ्जेव। उल्कायाम् हारा०।

**कुलुङ्ग** पुंस्त्री कुरङ्ग+पृषो०। हरिणभेदे स्त्रियां टाप्। "सोमाय कुलुङ्ग आरण्योऽजो नकुलः शकाः" यजु० २४।३२। "कुलुङ्गः कुरङ्गः हरिणः" वेददी० "ब्राह्मेभ्यः कुलुङ्गान्" यजु० २४।२७

**कुलुञ्च** त्रि० कुं भूमिं क्षेत्रगृहादिरूपां लुञ्चति हरति, कुत्सितं लुञ्चति वा लुन्च—अण्। चौरभेदे "उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः" यजु० १६।२२।

**कुलूत** पु० भूम्नि देशभेदे स च देशः वृ०सं० कूर्मविभागे वायव्यामैशान्यां च उक्तः यथा "दिशि पश्चिमोत्तरस्याम्" इत्युपक्रमे "अश्मककुलूतलहडस्त्रीराज्यनृसिंहवनखस्थाः" "ऐशान्यां मेरुकनष्टराज्य" इत्युपक्रमे "अभिसारदरदतङ्गणकुलूतसैरिन्ध्रवनराष्ट्राः"; तेन कुलूतदेशो द्विधा। तत्र भवः अण्। कौलूत तत्र भवे त्रि० बहुषु तस्य लुक् कुलूताः। तेषां राजा अण्। कौलूत तद्राज बहुषु तस्य लुक्। कुलूता तद्राजाः।

**कुलेचर** पु० कूले जलसमीपे चरति चर—अच् अलुक्स०। [illegible] शाकभेदे "चणककुलेचरवंशकरीरप्रभृतीनि कफहराणि सृष्टमूत्रपुरीषाणि" सुश्रुतः।

**कुलेश्वर** पु० ६त०। १शिवे २वंशपतौ च शब्दमा०

**कुलेय** त्रि० कुले भवः वा० ढ। कुलजाते "बभूव तत् कुलेयानां द्रव्यकार्य्यमुपस्थितम्" भा० आ० १७८अ०

**कुलोत्कट** पुंस्त्री० कुलेन उत्कटः। १कुलीनाश्वे शब्दच० २उत्कृष्टकुलजाते त्रि०

**कुलोद्वह** त्रि० कुलं वंशभारं रक्षणादिना उद्वहति उद्+वह—अच्। कुलपालके कुलश्रेष्ठे "पुत्रोऽमात्यानुरूपश्च शूरश्चेति कुलोद्वहः" भा० वि० ३५ अ०

**कुल्फ** पुंन०। कल—संख्याने फक् अस्य उच्च। १रोगभेदे २गुल्फे च उज्ज्वलद०। "कक्षीवन्तौ परि कुल्फौ च देहत्" ऋ०७,५०,२, "अथैनं दक्षिणा करवंकणमाघास" इत्युपक्रमे "कुल्फावैन्द्राग्नं हविः" शत०ब्रा० ११।५।२।३। "अथैनमुत्तरमकरित्युपक्रमे "कुल्फावैन्द्राग्नं हविः तस्मादिमौ द्वौ कुल्फाविति च" ११।५।२।५। "जानुदघ्नोऽद्वितीयः कुल्फदघ्नस्तृतीयः" शत०ब्रा० १२।२।१।१०।

**कुल्मल** न० कुष—क्मलच् लस्यान्त्यादेशः। १पापे उज्ज्वलद०। "तत्र मे गच्छताद्धवं शल्य इव कुल्मलं यथा" अथ० २-

१०.३०।२तद्वति त्रि० "अपाष्ठाच्छृङ्गात् कुल्मलाच्चिरवोषमहं विषम्" अथ० ४,६,५, जिह्वा ज्या भवति कुल्मलम् ५,१८,८,

**कुल्माष** पु० कोलति कुल–क्विप् कुल् माषोऽत्र ७त० । "अर्द्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः । कुल्माषा इति कथ्यन्ते इत्युक्ते १अर्द्धस्विन्नगोधूमादिषु वैद्यकम् "कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः" भावप्र० "सक्तून् पिबेद्वा कुल्माषं जलस्यापि शुभं पिबेत्" सुश्रु० । "बलाकां वारुणीकुल्माषाभ्याम्" (भाक्षीयात्) । सुश्रु० । "कथमिच्छाकफलीकरणकुल्माषस्थालीपुरीषादीन्यस्यतयद्व्ययहरति" भाग० ५,९,१०, । कुत्सिता माषाः पृषो० । २निन्दितमाषे च "स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे" छान्दो० उ० "कुल्माषान् कुत्सितान् माषान्" शा० भाष्यम् । ३सूर्य्यस्य पारिपार्श्विकभेदे ४शूकधान्ये यवादौ च शब्दचि० । ५काञ्जिके ६मसीपरिणामे च न० शब्दचि० ।
"कुल्माषाः कुलेषु सीदन्तीति" निरुक्तोक्ते ७कुत्सितार्थे त्रि० "कुल्माषांश्चिदाहरेत्यवकुत्सिते" निरुक्तकारः । कुल्माषाः प्राचुर्येणाश्नन्त्यस्याम् अण् स्त्रियां ङीप् । कौल्माषी पूर्णिमा । ८माषादिमिश्राद्र्भ्रष्टभक्ते (खेचडी) भरतः । ९रोगभेदे शब्दरत्ना० १०वनकुलत्थे रत्नमा०।

**कुल्माषाभिषुत** न० ३त० । काञ्जिके क्षीरस्वामी ।

**कुल्मास** न० कुल्माष+पृषो० । कुल्माषशब्दार्थे भरतः ।

**कुल्य** न० कुल–क्यप् । १अस्थ्नि अमरः । २अष्टद्रोणपरिमाणे शूर्पे ३आमिषे च मेदि० । कुले भवः यत् । ४कुलजाते ५मान्ये च त्रि० मेदि० । कुल+चतुरर्थ्यां बलाद्य० । ५कुलसन्निकृष्टदेशादौ त्रि० । कुलाय हितं यत् । ६कुलहिते त्रि० "इतीव कुल्याः पशुभूतवर्गान्" भाग० ७।६।१२ । कुल्यायां भवः यत् यलोपः । ८कुल्याभवे त्रि० "नमः कुल्याय च सरस्याय च" यजु० १६,३७ कलिमेऽल्पे १०सरिद्भेदे स्त्री अमरः ११पयःप्रणाल्याम् १२जीवन्त्यामोषधौ १३नदीमात्रे च स्त्री० मेदि० "सैन्धमारण्यमासाद्य कुल्यानां कुरु दर्शनम्" भा० अ० १०४० श्लो० । "घृतकुल्याश्च दध्नश्च मध्वो मङ्गलवाह्यया" भा० व० ८५.३० श्लो० । क्षीरकुल्या घृतकुल्या दधिकुल्या मधुकुल्या इत्यादि ।

**कुल्यासन** न० कुलाय कुलाचारायहितं यत् कुल्यमासनम् । "अथ कुल्यासनं वक्ष्ये यत् कृत्वा कुलिको भुवि । एकहस्तो मात्रकस्थोऽधःशीर्षो नाभिगे करे" इति रुद्रयामलोक्ते आसनभेदे

**कुल्लूक** पु० मन्वर्थमुक्तावलीनाम टीकाकारकविद्भेदे "श्रीमद्भट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत्" तट्टीकोपक्रमः ।

**कुल्व** कुल–उल्वा० नि० १लोमराहित्यरूपे । (टाक) रोगभेदे २तद्युक्ते त्रि० "अथैतानष्टौ विरूपानालभते अतिदीर्घं चातिह्रस्वं चातिस्थूलं चातिकृशं चातिशुक्लं चातिकृष्णं चातिकुल्वं चातिलोमशं च अशूद्रा अब्राह्मणास्ते प्राजापत्याः" यजु० ३०।२२। "अतिकुल्वं रोमरहितम्" वेददी०

**कुव** न० कुं भूमिं याति गच्छति या–क, कुङ् शब्दे कूङ्वज् वा । १जलजे, पुष्पमात्रे, २उत्पले च हेमच० ।

**कुवकालुका** स्त्री कुवमिव कायति कै–क आलुका । घोषीशाके । राजनि०

**कुवङ्ग** न० ईषद् वङ्गं गुणेन । सीसके राजनि० ।

**कुवचस्** त्रि० कुत्सितं वचोऽस्य । १कुत्सितवादकथके अमरः कुगतिस० । २परीवादकथने न० । कुवाक्यादयोऽप्यत्र न० ।

**कुवज्र** न० कुत्सितं वज्रं हीरकमिव कायति कै–क । वैक्रान्तमणौ राजनि० ।

**कुवम** पु० कौ पृथिव्यां वमति वर्षति जलं वम–अच् । १सूर्य्ये "कुलं कुलश्च कुवमः कुवमः काश्यपो द्विजः" भा० आनु० ९२अ० "कुः पृथिवी तस्यां वमति वर्षतीति कुवम आदित्यः "आदित्याद् जायते वृष्टिरिति" श्रुतेः सर्वोऽप्यादित्योऽहमेव मत्त एव सर्वेषामादित्यानामुत्पत्तेः" नीलकण्ठः । कुपयोः इति पाठान्तरे सूर्य्य एवार्थः । कुत्सितं वमति । २निन्दितवमनकारके त्रि० [ रायमुकुटः

**कुवर** पु० कुत्सितं व्रियते वृ–अप् । १तुवरे २कषाये ३तद्वति त्रि०

**कुवल** न० कौ वलति वल–अच् । १उत्पले २मुक्ताफले च मेदि० ३बदर्य्यां स्त्री० गौरा० ङीष् । तस्याः फलम् अण् लुक् । ४बदरीफले न० । कौ वलनात् । ५जले । ६सर्पोदरे च न० कुवलेशयः । प्रथमे परे समासे कर्क्यादि० अस्य नाद्युदात्तता । तस्य पाकः पील्वादि० कुणच् । कुवलकुण तत्पाके पु० ।

**कुवलय** न० कौ वलयमिव शोभाहेतुत्वात् । १उत्पले, अमरः २श्वेतोत्पले नीलोत्पले राजनि० "कच्चित् साधो ! कुवलयदलश्यामविस्तीर्णदृष्टे ! इत्युद्भवदूतम् । ततः तारका० इतच् । कुवलयित जातकुवलये त्रि० । "कुवलयितगवाक्षां लोचनैरङ्गनानाम्" रघुः । कौवलयम् ३त० । ४भूमण्डले न० "यतो भूवलयं सर्वं आत्नोऽयं विचरिष्यति । अतः कुवलयो नाम्ना ख्यातिं लोके प्रयास्यति" इत्युक्तनिरुक्तियुते ५असुरभेदे पु० ।

**कुवलयानन्द** पु० कुवलयं भूमण्डलमानन्दयति आ+नन्द्–अण्

उप०स०। चन्द्रालोकस्यालङ्कारमयूखव्याख्याने अप्पदीक्षितकृते ग्रन्थभेदे ६त०। २कुमुदस्यानन्दे च।
"अमुं कुवलयानन्दमकरोदप्पदीक्षितः। नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः। चन्द्रालोकोयिजयतां शरदागमसम्भवः। हृद्यः कुवलयानन्दोयत्प्रसादादभूदयम्"। तद्ग्रन्थसमाप्तौ "तस्माच्च कुवलयानन्दः सम्पन्नोऽभूत् कुवलयस्य कुमुदस्यानन्दइति च शोभते" चन्द्रिका

**कुवलयापीड** त्रि०कुवलयमापीडः भूषणं यस्य। नीलोत्पलभूषणवति १जने कंसासुरस्य हस्तिरूपधारिणि २दैत्यभेदे पु०। "नागं कुवलयापीडं चाणूरं मुष्टिकं तथा। कंसस्य बलिनां श्रेष्ठं सगणं देवशत्रुतः। अघ्नत् गोपवेशेन क्रीडासक्तोऽपि केशवः" हरिवं० १०६ अ० "राजा कुवलयापीडः समाजद्वारि कुञ्जरः। तिष्ठत्विति समाज्ञाप्य प्रेक्षागारमुपाययौ" हरि० ८६ अ०

**कुवलयाश्व** पु० कुव(ब)लाश्वनामके धुन्धुमारे नृपभेदे। स्वार्थे क तत्रार्थे "दृढदश्वस्तु श्रावस्तिस्ततः कुवलयाश्वकः। यः प्रियार्थमुतङ्कस्य धुन्धुनामासुरं बली। सुतानामेकविंशत्या सहस्रैरहनद्वृतः। धुन्धुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः। धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः" भाग० ६।६।१८।१६। कुबलाश्वशब्दे तच्चरितादि। [पलिम्यास् राजनि०।

**कुवलयिनी** स्त्री कुवलयानां संघः खलादि० इनि। उत्-

**कुवलाश्व** पु० कौ पृथिव्यां वलते वल अच् तादृशोऽश्वोऽस्य। कुवलयाश्वे धुन्धुमारे नृपभेदे।

**कुवलेशय** पु० कुवले जले शेते शी—अच् ७त० अलुक्स०। विष्णौ "कुमुदः कुवलेशयः" विष्णुस०। "क्षितौ वलनात् सम्वलनात् कुवलं जलं तस्मिन् शेषोदरे शेते इति कुवलेशयः, कुवलं वदरीफलं तन्मध्ये शेते कुवलेशयः तस्थकः सोऽपि भगवतोविभूतिरिति वा हरिः कुवलेशयः। कौ भूमौ वलति संश्रीयते सर्पोपासुदरं कुवलं तस्मिन् शेषोदरे शेते इति कुवलेशय इति" भाष्यम्।

**कुवाद** त्रि० कुत्सितं वदति अण्। अपरदोषकथनशीले। अमरः। भावे घञ् कुगतिस०। २कुत्सितवादे।

**कुवाहुल** पुंस्त्री वहति कु+वह—वा० उलञ्। उष्ट्रे शब्दचन्द्र० स्त्रियां ङीष्।

**कुवि(चि)क** पु० भूम्नि देशभेदे अयञ्च देशः वृह०सं० कूर्मविभागे ऐशान्यामुक्तः। "ऐशान्याभित्युपक्रमे कुनटखसघोषकुचि(वि) काख्याः" इति

**कुविद्** अव्य० कुः भूमिरिव विद्यते लाभते बाहुल्यात् विद—भावे क्विप् ६त०। १बाहुल्ये २प्रशंसायाञ्च। चादिमध्य व्याख्याने मनोरमा। उग्रैवंत् शतदभि च 'कुवित्सस्य प्रहि व्रजम्" ऋ० ६।४५।२४। "कुविदङ्ग यः स्तौति हिनस्ति" भा० "कुविज्ञो अस्य वचसः" ऋ०२।१६।७ कुविदङ्ग" भा०। 'स त्वष्टा चुक्रोध कुविन्मे पुत्रमवधीत्" शत० ब्रा० १।६ ३।६। "कुविदङ्ग नमसा ह्वधासः" ऋ० ७।९१।१। कुविदिति बहुनाम। अङ्गेति क्षिप्रनाम कुविदङ्गयोऽङ्ग क्षिप्रं कृतेन नमसा" भा०। "कुविद् अङ्ग" इति पदपाठे पदद्वयतया विभागः। एतेन कुविदङ्गेति एकशब्दकल्पनं चिन्त्यम्। कुत्सितं वेत्ति विद—ज्ञाने कर्त्तरि क्विप्। ४कुज्ञानवति त्रि०।

**कुविद्या** स्त्री कुगतिस०। १निन्द्यविद्यायाम्। ब०। २तद्वति त्रि०

**कुविद्यास** त्रि० कुविद्यां स्यति हिनस्ति सो—क। कुविद्यानिरासके। ततः कृशाश्वादिषु विकुश्यासेत्यत्र पाठान्तरेऽस्य पाठात् चतुरर्थ्यां छण्। कौविद्यासीय तत्सन्निकृष्टदेशादौ त्रि०।

**कुविन्द** पुंस्त्री कुं भूं कुत्सितं वा विन्दति विद—श। तन्तुवाये शूद्रागर्भे विश्वकर्म्मणो जाते जातिसङ्करभेदे अमरः [२निन्दितमण्डले च त्रिका०

**कुविम्ब** पु०न०। कोर्विम्बं कुत्सितं विम्बं वा। १भूमण्डले

**कुविवाह** पु०। कुगतिस० वर्णभेदेन निन्दनीयविवाहे मनुना वर्णभेदेन ब्राह्माद्यष्टविवाहेषु निन्द्यानिन्द्यत्वमुक्तं यथा
"चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान्। अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत" मनु०
"चतुर्णामिति। चतुर्णामपि वर्णानां ब्राह्मणादीनां परलोके इह लोके च कांश्चित् हितान् कांश्चिदहितान् इमान् अभिधास्यमानान् अष्ट संक्षेपेण भार्य्याप्राप्तिहेतून् विवाहान् शृणुत" कुल्लूकभट्टीका
"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" मनु
"त एते नामतो निर्द्दिश्यन्ते ब्राह्म इति। ब्राह्मराक्षसादिसंज्ञा चेयं शास्त्रादौ संव्यवहारार्था स्तुतिनिन्दाप्रदर्शनार्था च। ब्रह्मण इवायं ब्राह्मः रक्षस इवायं राक्षसः न तु ब्रह्मादिदेवताकत्वं विवाहानां सम्भवति। पैशाचस्याधमत्वाभिधानं निन्दातिशयार्थम्" टी०
"यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ।

त्रिदोषोल्वणमिति । पूर्व्वरूपमाह "अतिश्लक्ष्णः खरस्पर्शः स्वेदास्वेदविवर्णता । दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः । व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः । रूढ़ानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् । रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्" । अतिश्लक्ष्णः अतिमृदुः । अथवा घर्मादिप्रसङ्गेऽपि स्वेदाभावः । त्वचि स्वापः स्पर्शाज्ञता । शीघ्रोत्पत्तिः व्रणानाम् । "दूषयन्ति त्वचो कृत्वा निश्चलत्वादितस्ततः । त्वचः कुर्व्वन्ति वैवर्ण्यं दोषाः कुष्ठमुशन्ति तम्" । येनोल्वणेन यत्कुष्ठमुत्पद्यते तदाह । "वातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात् । मण्डलाख्यं विचर्च्ची च ऋष्याख्यं वातपित्ततः । चर्म्मैककुष्ठकिटिभं सिध्मालसविपादिकाः । वातश्लेष्मोद्भवाः पित्तकफाद्दद्रूशतारुषी । सपुण्डरीकविस्फोटपामाचर्म्मदलं तथा । सर्व्वैर्दोषैल्वणैर्दोषैराङ्गः काकणकं बुधाः" । विचर्च्ची च कफादित्यन्वयः । पुण्डरीकं सविस्फोटं पामा चर्म्मदलं तथा पित्तकफादित्यन्वयः । अथ महाकुष्ठानां मध्ये कपालस्य लक्षणमाह । "कृष्णारुणं कपालाभं यद्रूक्षं परुषं तनु । कपालं तोदबहुलं तत् कुष्ठं विषमं स्मृतम्" । किञ्चित्कृष्णाः किञ्चिदरुणाः ये कपालाः स्फुटितमृत्पात्रखण्डाः 'खपरा' इति यावत् तद्वर्णं, परुषं खरस्पर्शम् । तनु तनुत्वक् कपालम् कपालसंज्ञं, विषमं दुश्चिकित्स्यम् । औदुम्बरमाह "उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् । रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम्" । औदुम्बरफलाकारम् । मण्डलमाह "श्वेतरक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् । कृच्छ्रमन्योन्यसंसक्तं कुष्ठं मण्डलमुच्यते । श्वेतरक्तं किञ्चिच्छ्वेतं किञ्चिद्रक्तम् । स्थिरं चिकित्सां विना अविनाशि, स्त्यानम् आर्द्रं, स्निग्धं सस्वेदम् । उत्सन्नमण्डलम् उन्नतमण्डलम् । कृच्छ्रं कष्टसाध्यम् । अन्योन्यसंसक्तं परस्परमिलितम् । अथ सिध्ममाह "श्वेतताम्रञ्च तनु यत् रजोघृष्टं विमुञ्चति । प्रायेणोरसि तत् सिध्ममलाबूकुसुमोपमम्" । श्वेतताम्रं श्वेतं ताम्रम् । तनु तनुत्वक् । प्रायेणोरसि प्रायशब्दादन्यत्रापि बोद्धव्यम् काकणमाह "यत्काकणन्तिकावर्णमपाकं तीव्रवेदनम् । त्रिदोषलिङ्गं तत् कुष्ठं काकणं नैव सिध्यति । काकणन्तिका गुञ्जा । गुञ्जावर्णत्वेन मध्ये कृष्णमन्ते रक्तम् । अथवा मध्ये रक्तं मध्यान्ते कृष्णम् । अपाकं स्वभावात् । त्रिदोषलिङ्गम्-सर्व्वेषां कुष्ठानां त्रिदोषजत्वेऽपि उल्वणदोषमयलिङ्गम् । पुण्डरीकमाह "तत् श्वेतं रक्तपर्य्यन्तं पुण्डरीकदलोपमम् । सरागञ्चैव सोत्सेधं पुण्डरीकं कफोल्वणम्" पुण्डरीकदलोपमं पुण्डरीकं श्वेतकमलं तत्पत्रोपमम् सरागञ्चैव । अत एव श्वेतं, रक्तपर्य्यन्तं अन्ते रक्तम् । सरागमिति अन्ते लौहित्याधिक्यबोधनार्थम् । सोत्सेधम् उन्नतम् । ऋष्यजिह्वकमाह "कर्कशं रक्तपर्य्यन्तमन्तःश्यावं सवेदनम् । यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते" । रक्तपर्य्यन्तं अन्ते रक्तम् अन्तःश्यावं मध्ये धूम्रवर्णम् । ऋष्यजिह्वासंस्थानम् ऋष्यो मृगभेदस्तस्य जिह्वाकृति । अथ क्षुद्रकुष्ठानां मध्ये एककुष्ठगजचर्म्मणोर्लक्षणमाह "अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् । तदेककुष्ठं चर्म्माख्यं बहुलं हस्तिचर्म्मवत्" । महावास्तु महास्थानम् । मत्स्यशकलोपमम् अत्र शकलशब्देन लक्षणया त्वगुच्यते । तेन चक्राकारमत्स्यकपलसदृशं भवति । एककुष्ठमिति क्षुद्रकुष्ठेषु मुख्यत्वात् । चर्म्माख्यं गजचर्म्माख्यम् बहुलं स्थूलम् गजचर्म्मवत् रूक्षं कृष्णं च । अथ चर्म्मदलमाह "रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि । तच्चर्म्मदलमाख्यातं संस्पर्शासहनञ्च यत्" । दलयत्यपि विदारयत्यपि चर्म्मेति शेषः । विचर्च्चिकामाह "सकण्डूः पिडका श्यावा बहुस्रावा विचर्च्चिका" । पिडका क्षुद्रपिडका । ननु क्षुद्रकुष्ठानां कथमेकादशत्वं विपादिकाया द्वादशत्वसम्भवात् उच्यते । विचर्च्चिकैव पादयोर्भवन्ती विपादिका तेन संख्यानतिरेकः । अतएव भोजः "दाल्यते त्वक् यया हस्तपादयोर्ज्ञेया विचर्च्चिका । पादे विपादिका ज्ञेया स्थानभेदाद्विचर्च्चिका" । दाल्यते विदार्य्यते । केचिद्विचर्च्चिकातो विपादिकां भिन्नामाहुः । विपादिकामाह "वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम्" । पाणिपादस्फुटनं पाण्योः पादयोश्च स्फुटनं विदारणं येन तत् । पामामाह "सूक्ष्मा बह्व्यः स्राविण्यः सदाहाः पामेत्युक्ताः पिडकाः कण्डूमत्यः" । पिडकाः पीडयन्तीति पिडका इति क्षिपकादित्वात् निपात्यते । कच्छूमाह "सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छूरुग्रा स्फिचोश्च" । सैव पामा स्फोटैः महद्भिः, स्फिचौ-पोंदौ । दद्रूमाह "सकण्डूरागपिडकं दद्रूमण्डलमुद्गतम्" । दद्रूमण्डलरूपेणोत्पतितम्, उद्गतम् उच्छूनम् । विस्फोटमाह "स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः" । किटिभमाह "श्यावं किणखरस्पर्शं परुषं किटिभं स्मृतम् ।

त्रिपाद्यवरुणैर्नु त्रिषः शुक्लव्रणस्थानं तद्वत् कर्कशमर्मम्। यद्वर्णं कृष्णम्। अलसकमाह "कण्डू-मद्भिः सरागैश्च गण्डैरलसकं चितम्" गण्डैः महापिडकाभिः चितं व्याप्तम्। शतारुमाह "रक्तश्यावं सदाहार्त्ति शतारुः स्यात् बहुव्रणम्"। अथ सप्तधातुगतानां कुष्ठानां लक्षणान्याह तत्र त्वग्गतस्य लक्षणमाह "त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यञ्च जायते। त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम्"। त्वक्शब्देनात्र रस उच्यते आश्रयाश्रयिणोरभेदात्। त्वक्स्थत्वाच्च त्वक्स्वापः स्प-र्शाज्ञानम्। त्वक्स्वाप इत्यादिकं कैश्चिद्रक्तगतस्य लिङ्गं मन्यन्ते। रुधिरगतमाह "कण्डूर्विपूयकश्चैव कुष्ठे शो-णितसंश्रये"। विपूयकः विशेषेण पूयः। अथ मांस-गतमाह "बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः। तोदः स्फोटः स्थिरत्वञ्च कुष्ठे मांससमाश्रिते"। बाहुल्यं कुष्ठस्य वृद्धिः। पिडकोद्गमः क्षुद्रपिडकोद्गमः स्फोटः वृहत्पिडका। स्थिरत्वम् अचञ्चारित्वम्। मेदोगत-माह "कौण्यङ्गतिक्षयोऽङ्गानां सम्भेदः क्षतसर्पणम्। क्षतप्रचारो लिङ्गानि पूर्वोक्तानि यानि च। मेदःस्थान गते लिङ्गं प्रोक्तानि तथैव च"। कौण्यं हस्तनाशः। अङ्गानां सम्भेदः अङ्गभङ्गः, क्षतसर्पणं क्षतप्रसरणं, पू-र्वोक्तानि रक्तमांसगतलिङ्गानि। अस्थिमज्जागतमाह "नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसम्भवः। स्वरोप-घातः पीडा च भवेत् कुष्ठेऽस्थिमज्जगे"। शुक्रगतमाह "दम्पत्योः कुष्ठबाहुल्याद् दुष्टशोणितशुक्रयोः। यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्"। ननु शुक्रशोणित-शुक्रगतत्वे दम्पत्योर्गर्भसम्भवः दुष्टशोणितशुक्रयोः कथम् अपत्योत्पत्तिः? अत आह सुश्रुतः "का-मान्मिथुनसंयोगे शुद्धशोणितशुक्रजः। गर्भः सञ्जायते नार्याः स जातो बाल उच्यते"। अथान्यत्र "वातादि-दुष्टेऽसकोऽप्यस्योत्पादनेऽसमर्थः" इति। उच्यते। गर्भो-ऽत्र शुद्धो बोद्धव्यः। अशुद्धगर्भोऽपि दुष्टशोणितशुक्र-योरपि भवति गतकल्पाश्वतरादीनां सम्भवात्। शोणितनाशार्थम्। कुष्ठितं कुष्ठं सञ्जातमस्येति तार-कादित्वादितच्। शुक्रार्थमपि कुष्ठमत्येन व्यज्यते इति तात्पर्यम्। कुष्ठेषु वातादिदोषचिह्नमाह "खरं श्यावारुणं रूक्षं वातात् कुष्ठं सवेदनम्। पित्तात् प्रकुथितं दाहरागस्रावान्वितं मतम्। कफात् क्लेदि घनं स्निग्धं सकण्डूशैत्यगौरवम्। द्विलिङ्गं द्वन्द्वजं कुष्ठं त्रि-लिङ्गं सान्निपातिकम्"। खरं कर्कशम्। श्यावारुणं श्यावं वा अरुणं वा। प्रकुथितं पूतिक्लेदबहुलम्। क्लेदम् आर्द्रतायुक्तम् घनं पुष्टम्। साध्यत्वादिकमाह "साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकञ्च यत्। मेदोगं द्वन्द्वजं याप्यं वर्ज्यं मज्जास्थिसंश्रितम्। क्रिमितृड्दाहमन्दा-ग्निसंयुक्तं यत् त्रिदोषजम्"। वातश्लेष्माधिकञ्च यत् एतेन विस्फोटकुष्ठगजचर्मविपादिकाकिटिभालसकानि साध्यानि। मज्जागतं शुक्रगतमप्यसाध्यम्। क्रिमि-र्वीह्न्योऽपि वर्ज्यं इत्यन्वयः। अरिष्टमाह "प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम्। पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम्"। प्रभिन्नं विदीर्णम्। हतस्वरं घर्घरस्वरम्। पञ्चकर्मगुणातीतम् असञ्जातवमनादिपञ्च-कर्मगुणम्। अथ त्वग्दुष्टिसाम्यात् कुष्ठभेदत्वाभावेऽपि श्वि-त्रमाह "कुष्ठैकसम्भवं श्वित्रं किलासं चारुणं भवेत्। निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्"। कुष्ठैकसम्भवं कुष्ठेन सहैकः समानः सम्भवो निदानं यस्य तत्। अथ श्वित्रस्य भेदमाह किलासञ्चारुणं भवेत्। श्वित्रमेव रक्तमां-साश्रयात् किलाससञ्ज्ञमरुणञ्च भवेदित्यर्थः। ननु कुष्ठस्य श्वित्र-स्य च को भेद इत्यत आह निर्दिष्टमपरिस्रावीति श्वित्रम-परिस्रावि भवति कुष्ठन्तु स्रावि अथ च त्रिधातूद्भवसं-श्रयमिति। त्रयो धातवो वातपित्तकफास्तेभ्यः उद्भू-तेभ्य उद्भवो यस्य तत् श्वित्रम्। अथ वा त्रयो धातवो र-क्तमांसमेदांसि संश्रयोऽधिष्ठानं यस्य तत्। कुष्ठन्तु सा-न्निपातिकं सर्वधातुगतं भवतीति भेदः। दोषभेदेन लक्ष-णभेदानाह "वाताद्रूक्षारुणं, पित्तात् ताम्रं कमलपत्र-वत्। सदाहं रोमविध्वंसि, कफात् श्वेतं घनं गुरु। सकण्डूकं क्रमाद्रक्तमांसमेदःसु चादिशेत्। वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम्"। अरुणमीषल्लोहितम्। कमल-पत्रवदित्यनेन मध्ये श्वेतमन्ते लोहितं बोधयति। घनं पुष्टम्। क्रमाद्रक्तमांसमेदःसु चादिशेत्। तथा च चरकः "अरुणं रक्तसंवाने ताम्रं पित्ते पलङ्कृते। श्वेतं श्लेष्माणि मेदःस्थे श्वित्रं कुष्ठं परापरमिति" उभयं द्विविधमपि श्वित्रं वर्णेन ईदृगेव। अरुणं ताम्रं श्वेतञ्च दोषभेदात्। द्विविधं दोषजं व्रणजं च। तथा च भोजः "श्वित्रं तु द्वि-विधं विद्याद्दोषजं व्रणजं तथेति"। श्वित्रं साध्यमसाध्य-ञ्चाह "अशुक्लरोमबहुलमसंसृष्टं मिथो नवम्। अनग्नि-दग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा"। अवश्यं तत्। अन्यच्च "गुह्यपाणितलौष्ठेषु जातमप्यचिरन्त-

[illegible]नीयं विशेषेण किलासं विशिमिच्छता"। [illegible]कम् अगम्यं तलमलपदतलं, तत्र जातं कुष्ठमे-[illegible]मिति सामान्यतो निर्दिष्टत्वात्। अपश्चिरन्त-[illegible]मपि। कुष्ठस्य संसर्गजत्वप्रसङ्गेनान्यानपि संसर्ग-[illegible] रोगानाह "प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात् सह [illegible]"। प्रसङ्गो मैथुनम्। "एकशय्यासनाच्चापि वस्त्र-
। कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च।
सर्वरोगाश्च संक्रामन्ति नरान्नरम्। म्रियते यदि कुष्ठेन पुनर्जातस्य तद्भवेत्। अतो निन्दितरोगोऽयं कुष्ठं कष्टं प्रकीर्त्तितम्"। एतावता कुष्ठिनां कुष्ठं सर्वथा प्रती-कारणीयं न तु उपेक्षणीयम्"।

एतेषां मध्ये केषाञ्चित् महापातकचिह्नत्वं केषाञ्चि-दतिपातकचिह्नत्वं केषांचिच्चोपपातकचिह्नत्वं स्मृत्यादौ प्रसिद्धम्। अष्टादशानां मध्ये अष्टानामेव पापरोगतया स्मृतौ तदुक्तप्रायश्चित्तादिकमुक्तं तच्च शु०त०निर्णीतं यथा भविष्यपुराणीयमध्यतन्त्रस्य षष्ठाध्याये "शृणु कुष्ठगणं विप्र! उत्तरोत्तरतोगुरुम्। विचर्चिका तु दुश्चर्म्म चर्म्म-दलस्तु तीयकः। विकृतं चं विसर्पाख्यौ च लक्ष्यन्ते तथाष्ट-कम्। एषां मध्ये तु यः कुष्ठी गर्हितः सर्व्वकर्म्मसु। व्रण-वत् सर्व्वगात्रेषु गलज्जे भाले तथा नसि"। तथा 'तत्रैव प्रोषधैस्तीर्थे अथवा तरुमूलके। न पिवेत् गोदकं कुष्ठी-जस्य दाहक्रियाञ्चरेत्। षण्मासीयविश्वमासीयोक्ततः कुष्ठी कदा चन। यदि स्नेहाश्च देहात् यतिचान्द्रायणं चरेत्"। यतिचान्द्रायणासक्तौ पादोनधेनुचतुष्टयं देयम्। अतिपा-तकरूपफलजनादक्षेयं युक्तं यथाह विष्णुः "अथ न-रकानुभूतदुःखानां तिर्य्यक्त्वदर्शनीयानां मानुष्ये लक्ष्य-णानि भवन्ति कुष्ठातिपातकी, ब्रह्महा यक्ष्मी, सुरापः श्यावदन्तकः, सुवर्णहारी कुनखी, गुरुतल्पगो दुश्चर्म्मा, इत्यादि। श्यावदन्तकः स्वभावकृष्णदन्तकः प्रधानदन्तद्वय-मध्यवर्त्तिक्षुद्रदन्तः। प्रधानदन्तोपरि दन्तान्तरमिति केचित्। कुनखी सङ्कुचितनखः, दुश्चर्म्मा स्वभावतः प्र-नाष्टतमेदः,। अत एव महारोगिणोऽयावच्छौचमशौच-माह कूर्म्मपुराणम् "क्रियाहीनस्य मूर्खस्य महारोगिण एव च। यथेष्टाचरणस्याहुर्मरणान्तमशौचकम्"। क्रि-याहीनस्य नित्यनैमित्तिकक्रियाननुष्ठायिनः। मूर्खस्य गायत्रीरहितस्य। सार्थगायत्रीरहितस्येति वद्भचरः। महारोगिणः पापरोगाद्यकान्यतमरोगवतः। ते च उ-न्मादस्त्वग्दोषो राजयक्ष्मा श्वासोमधुमेहोभगन्दरः उद-रोऽश्मरी चेत्यष्टौ पापरोगमहारोगाः। यथेष्टाचारस्य [illegible]। एवञ्च भविष्यपुराणोक्तं यति-चान्द्रायणप्रायश्चित्तमकृतप्रायश्चित्तानां कुष्ठ्यादीनां दाहे [illegible] प्रायश्चित्तोपदेशोविफलःस्यात्। यथाह विष्णुः "कुनखी श्यावदन्तश्च द्वादशरात्रं कृच्छ्रं चरित्वो-द्धरेयातां तद्दन्तनखौ" इति अत्र द्वादशरात्रं पराकद्वयं तत्र पञ्च धेनवः नतु प्राजापत्यं तद्द्वादशकं यतिचान्द्रा-यणेन विषमशिष्टत्वात् अत्र बहूनामेकधर्म्मत्वामिति वच-नादाकाङ्क्षितत्वाच्च कुष्ठ्यादीनामपि प्रायश्चित्तम्। अतएव प्रायश्चित्तविवेकेऽप्युक्तमेतं दुश्चर्म्मादिष्वपूर्व्वामिति। महा-पातकादतिपातकस्य गुरुत्वात् तच्छेषेऽपि प्रायश्चित्तं द्विगु-णम्। कर्म्मविपाके शातातपः "महापातकजं चिह्नं सप्तजन्मसु जायते। बाधते व्याधिरूपेण तस्य कृच्छ्रा-दिभिः शमः। कुष्ठञ्च राजयक्ष्मा च प्रमेहोग्रहणी तथा"। अत्र कुष्ठपदमत्र कुष्ठपरमिति पूर्व्वेणाविरोधः"।

**कुष्ठकेतु** पु० कुष्ठं तन्नाशनः केतुश्चिह्नं यस्य। मार्कण्डिकायां (भूँइखखसा) वृक्षे राजनि०

**कुष्ठगण** पु० कुत०। शु०त०उक्ते कुष्ठशब्दे दर्शिते अष्टाद्यात्मादि प्रयोजके कुष्ठभेदसमूहे स च कुष्ठशब्दे भावप्र० अष्टादश-विधो वर्णितः स च कुष्ठशब्दे दर्शितः [राजनि०

**कुष्ठगन्धि** न० कुष्ठस्येव गन्धोऽस्य इच् समा०। एलवालुके

**कुष्ठगन्धिनी** स्त्री० कुष्ठस्येव गन्धोऽस्याः इनि ङीप्। अश्व-गन्धायां शब्दच०

**कुष्ठघ्न** त्रि० कुष्ठं हन्ति हन–टक्। कुष्ठनाशके औषधे "महारिकायां कुष्ठघ्नलेपनादिक्रिया हिता" सुश्रु०। २हितावल्यां पु० राजनि०३काकोदुम्बरिकायां ४नाकुल्यां च स्त्री ङीप् राजनि०

**कुष्ठनाशन** पु० कुष्ठं नाशयति नश–णिच्–ल्यु। १वाराही कन्दे २ श्वेतसर्षपे च राजनि० ३क्षीरीशवृक्षे रत्नमा० ४कुष्ठनाशके औषधादौ त्रि०

**कुष्ठनाशिन्** त्रि० कुष्ठं नाशयति नश–णिच्–णिनि। कुष्ठ-नाशके स्त्रियां ङीप्। सा च २सोमराज्यां रत्नमा०

**कुष्ठल** न० कुत्सितं स्थलम् अम्बष्ठादित्वात् षत्वम्। कुत्सितस्थले

**कुष्ठविद्** स्त्री कुष्ठस्य तत्स्वरूपादेः विद् विद्या विद्–सम्प० भावे क्विप्। कुष्ठस्वरूपादिविद्यायां तत्र साधु कथादि० ठक्। कौष्ठविदिक तत्र साधौ त्रि० कुष्ठं वेत्ति कर्त्तरि क्विप्। २कुष्ठस्वरूपवेत्तरि त्रि०। [राजनि०। २कुष्ठनाशके त्रि०

**कुष्ठसूदन** पु० कुष्ठं सूदयति सूदि–ल्यु। १आरग्वधे(सोन्दाल)

